ण्याभिरूप्यते। 'याः' एताः "ओषधयः" 'पूर्वाः' प्रथमाः 'जाताः'। कुतः ? 'देवेभ्यः' न तावद् देवा उत्पद्यन्ते, अथैता एव पूर्वमुत्पद्यन्ते। कियति काले ? 'त्रियुगं पुरा' कलिद्वापर-त्रेताभ्यः पूर्वम्, आदिकल्पे, आद्ये कृतयुगे, देवानामपि ह्यन्नमन-पेक्ष्य जीवनहेतुस्थितिर्नास्तीति पूर्वमन्नमुत्पद्यते पश्चाद् देवा इति। किं तासाम् ? इति, "मनै नु "बभ्रूणामहं शतं धामानि सप्त च"। तासाम् 'अहं' 'बभ्रूणां बभ्रुवर्णानाम्" ओषधयः स्वभावतः सर्वा एव पच्यमाना बभ्रुवर्णाः कपिलाः सम्पद्यन्ते। 'मनै' जाने 'शतं धामानि, सप्त च' सप्ताधिकं शतमहं तासां यथावज्जाने। अथवा बभ्रूणामिति वर्णव्यापत्त्या "हरणानाम् —इति, ता हि क्षुदादि हरन्ति। "भरणानाम्—इति वा" भर्त्र्यस्ताः सर्वस्य भूतग्रामस्य वा। ओषधयः प्रथमा जाताः "देवे-भ्यस्त्रीणि युगानि पुरा मन्ये" तद् बभ्रूणामहं बभ्रुवर्णानां हर-णानामिति वा। 'शतं धामानि सप्त च' व्याख्यातमेतत्। "धामानि त्रयाणि भवन्ति,—स्थानानि, नामानि, जन्मानि" इति, इह तु "जन्मानि अभिप्रेतानि"। सप्तशतम् ओषधिजातयः एतस्मिन् मन्त्रे अभिप्रेताः, अथवा "सप्तशतं पुरुषस्य मर्मणाम्, तेषु एना दधति—इति वा" अस्मिन् पक्षे धामानि स्थानानि॥

"रात्रिः"—इति, एतत् पदम्। तत् पुनरभिधानतोऽभिधेय-तश्च व्याख्यातम्,—"रातेर्दानकर्मणः"—इति॥

"तस्याः" "एषा" स्तुतिः "भवति"—॥ ७ (२८)॥

आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः। दिवः सदांसि बृहती वितिष्ठस आ त्वेषं वर्त्तते तमः॥ आपूपुरस्त्वंरात्रि पार्थिवं रजः स्थानैर्मध्यमस्य दिवः सदांसि बृहती महती वितिष्ठस आवर्त्तते त्वेषं तमो रजोऽरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं ग्रामादरमणं भवतीति वा तस्या एषा भवति॥ ८ (२६)॥

"आ रात्रि पार्थिवं रज" -इति। कुशिकस्यार्षम्, रात्र्या वा। हे 'रात्रि!' या त्वम् "आपूपुर." 'पार्थिवं रज.' पृथिवीलोकम् आपूरयसि। किं केवलमेतदेव ? न, इत्युच्यते,— 'पितु' धामभि.' "मध्यमस्य स्थानै." सह, सहान्तरिक्षेण, तदपि ह्यापूर्य्यसे तमसा। किमेतावदेव ? न, इत्युच्यते,—किन्तर्हि ? 'दिव.' द्युलोकस्यापि यानि 'सदांसि' सदनानि, येषु हि द्युलोकवासिनः सदनेषु स्थानेषु, सीदन्ति तान्यपि। 'बृहती' महती यस्मात् त्वम्, तस्माद् दूरेऽपि वर्त्तमाना 'वितिष्ठसे' विष्टभ्य तिष्ठसि। न केवलं विष्टभ्यैव तिष्ठसि, किन्तर्हि ? आपूर्य्य द्युलोकमपि तत्पूरणातिशिष्टं 'तमः' 'त्वेषं' महत् पुनरिममेव लोक प्रति आवर्त्तते यस्या. तव, सा त्वमस्माकं सर्वदा शिवा भव।—इत्येतदाशास्महे॥

"अरण्यानी"—इति, एतत् पदम्। सा पुनः "अरण्यस्य पत्नी" पालयित्री देवता। अथ अरण्यं कस्मात् ? "अरण्यम् =

अपार्णं ग्रामात्" तद्धि ग्रामादपार्णमपगतं भवति, "ऋ गतौ"—इत्यस्य। "अरमणं भवति—इति वा" रमेः प्रतिषेधपूर्वस्य, न ह्यरण्ये रतिर्भवति॥

"तस्याः एषा भवति" स्तुतिः—॥८ (२९)॥

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि। कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती ३॥ अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीवः परिभयार्थे वा श्रद्धा श्रद्धानात्तस्या एषा भवति॥ ९ (३०)॥

"अरण्यान्यरण्यानि"—इति (ऋ० सं० ८, ८, ४, १)। ऐरम्मदस्य देवमुनेरार्षम्। सम्बुद्धावेकवचनं पूर्वम्, द्वितीयाबहुवचनमुत्तरम्। उतपन्नदिङ्मोहो मन्त्रदृक् अरण्ये भीतोऽरण्याधिदेवतामरण्यानी ब्रवीति,—अहं तावदेतस्मिन्नरण्ये निरमणे भीतः, कथं त्वं न बिभेषि? इति। भीषयमाण इव।—हे 'अरण्यानि' कथं त्वम् 'अरण्यानि' "वनानि" प्रति केवल 'प्रेव' "पराचीव" पराङ्मुखीव अनावर्त्तमाना 'नश्यसि'? 'असौ' असाविति दृश्यमाना इव। यतो ब्रवीमि—"कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती ३"। अथ "वा इवः परिभयार्थे" न त्वमीषदपि बिभेषीति परिरोषदर्थः। तद्यथा परिमधुरं पर्याप्तमिति॥

"श्रद्धा"—इति, एतत् पदम्। अत्र "श्रत्"—इति सत्य नाम पूर्वपदम्, तत् सत्यमस्यां धीयत इति श्रद्धा, धर्मार्थकाम मोक्षेषु अविपर्य्ययेणैवमेतदिति या बुद्धिरुत्पद्यते, तदधिदेवताभावाख्यां श्रद्धेत्युच्यते। सा पुनः आग्नेय सर्वं प्रकाशमिति अग्निरेव॥

"तस्या एषा भवति" स्तुतिः—॥ ९ (३०)।

श्रद्धयाग्निः समिद्ध्यते श्रद्धया हूयते हविः। श्रद्धां भगस्य मूर्द्धनि वचसा वेदयामसि॥ श्रद्धयाग्निः साधु समिद्ध्यते श्रद्धया हविः साधु हूयते श्रद्धां भगस्य भागधेयस्य मूर्द्धनि प्रधानाङ्गे वचनेनावेदयामः पृथिवी व्याख्याता तस्या एषा भवति॥ १० (३१)॥

"श्रद्धयाग्निः समिद्ध्यते"—इति (ऋ० सं० ८, ८, ६ १)। श्रद्धायाः कामायन्या आर्षम्। य एव 'अग्निः' 'श्रद्धया' उपेतः, श्रद्धयैवास्तिक्यबुद्धिमालम्ब्य 'समिद्ध्यते' कर्मणि, स एव "साधु" शोभनं समिद्ध्यते, इतरो हि समिद्धोऽप्यसमिद्ध एव, अश्रद्धासमिद्धाग्निकर्मणः फलाभावात्। एवमेव "श्रद्धया हूयते हविः" यदेव श्रद्धया हूयते हविः, तदेव "साधु हूयते" अन्यस्याफलत्वात्, उक्तश्च—'नाश्रद्धानाय हविर्जुषन्ति देवाः"—इति। एवं चेत्—"श्रद्धां भगस्य मूर्द्धनि वचसा वेदयामसि"। 'भगस्य' "भागधेयस्य" धर्मस्य 'मूर्द्धनि' "प्रधानाङ्गे" मूर्द्धा शिरः,

प्रधानमिदमङ्गं धर्मस्य या श्रद्धा, तदभावे धर्माभावात्। अपि च 'वचसा' एव "वचनेन" एव मन्त्रगतेन-"अश्रद्धामनृते दधाच्छ्रद्धाँ सत्ये प्रजापतिः"—इत्यनेनैव तदुद्घाट्य शिरःप्रकाशम् 'वेदयामसि' "आवेदयामः" आघोषयामो नाश्रद्दधानस्य धर्म इति ॥

"पृथिवी" "व्याख्याता" "अथ वै दर्शनेन पृथु."—इत्यत्र।

"तस्या एषा भवति"—॥ १० (३१) ॥

स्योना पृथिवि भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथः ॥ सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति यच्छ नः शर्म यच्छन्तु शरणं सर्वतः पृथुरप्यां व्याख्याता तस्या एषा भवति ॥ ११ (३२) ॥

"स्योना पृथिवि भव"—इति (ऋ० सं० १, २, ६ ५, य० वा० सं० ३५, २१)। मेधातिथेरार्षम्। हिरण्यनाशप्रायश्चित्तेष्ट्यां भौमस्यैककपालस्य पुरोऽनुवाक्या। हे 'पृथिवि!' 'स्योना' "सुखा" त्वमस्माकं 'भव'। कथम्? "अनृक्षरा निवेशनी"। 'अनृक्षरा' निष्कण्टका, 'निवेशनी' निवासयोग्या। निर्विघ्नानाञ्चास्माकं 'यच्छ' देहि 'शर्म' सुखम् 'सप्रथः' "सर्वतः पृथु" विस्तीर्णमिति ॥

"ऋक्षरः=कण्टक" "ऋच्छतेः"।—"कण्टकः"—"कं तपः वा" "कृन्ततेः वा" "कण्टतेः वा स्यात् गतिकर्मण', उद्गततमो भवति"। कमहं तापयामीति एवमर्थमुद्गतः, कण्टकः। कण्टतेर्वा, स ह्युद्गततमो भवति वृक्षात्॥

"अप्वा" "व्याख्याता"। "यदेनया विद्धोऽपवीयते, व्याधिर्वा भयं वा"—इत्यत्र व्याख्या॥

"तस्या एषा भवति"—॥ ११ (३२)॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि। अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्॥ अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्तामग्नाय्यग्नेः पत्नी तस्या एषा भवति ॥ १२ (३३)॥

"अमीषां चित्तम्"—इति (ऋ० सं० ८, ७, २३, ६। य० वा० सं० १७, ४४। सा० स० उ० आ० ६, ३, ५, १। अथ० सं० ३, २, ५)। अप्रतिरथस्यार्षम्। हे 'अप्वे!' 'अमीषाम्' असच्छत्रूणां 'चित्तम्' "चित्तानि" मनांसि 'प्रतिलोभयन्ती' "प्रतिलोभयमाना" प्रत्येकं लोभयन्ती 'गृहाण अङ्गानि' सर्वगात्राणि आविश, त्वयैते आविष्टसर्वगात्राः साध्वसिनः उत्पन्नवेपथवः सम्मूढाः अप्रतिपक्षाः सन्तु। 'परेहि' परागच्छ एतान्। अपि च यावच्च प्रत्यवस्थिता-

स्तावदेकैकं क्षिप्रम् 'अभिप्रेहि'। अभिप्रगत्य च 'निर्दह' "एषाम्" 'हृत्' "हृदयानि" 'सुशोकैः'। त्वया एते निर्दग्धहृदयाः 'अमित्राः' अस्मदमित्राः "अन्धेन तमसा" 'सचन्ताम्' "संसेव्यन्ताम्"।— इत्येतदाशास्महे ॥

"अग्नायी" "अग्नेः पत्नीः" ॥

"तस्या एषा भवति"—॥ १२ (३३) ॥

इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये। अग्नायीं सोम-पीतये। इति सा निगदव्याख्याता ॥ १३ (३४) ॥

इति नवमाध्यायस्य तृतीयः पादः ॥ ६, ३ ॥

"इहेन्द्राणीमुपह्वये"—इति (ऋ० सं० १, २, ६, २)। "इति सा निगदव्याख्याता"। 'इह' कर्मणि 'अग्नायीम्' 'उपह्वये' 'सोमपीतये' सोमपानाय, आत्मनश्च 'स्वस्तये' 'इन्द्राणीम्' अपि च 'वरुणानीम्' ॥

असाधारण्येनेन्द्राणीञ्च वरुणानीञ्च अग्नायीञ्च इह कर्मणि उपह्वये सोमपानाय स्वस्तये च,—इत्येवं सति "तस्या एषा भवति"—इति भाष्यकारवचनं नोपपद्यते,—सोमपानसम्बन्धात् मध्यमा? इति चेत्, नैतत्, अग्निरपि हि सोमपानसम्बन्धे उक्तः,—"सोमं पिब मन्दसानो गणश्रिभिः (ऋ० सं० ४, ३, २५, ८)"—इति, तस्मादुपपद्यत इति ॥ १३ (३४) ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ चतुर्दशाध्यायस्य (नवमा-ध्यायस्य) तृतीयः पादः ॥ ६, ३ ॥

## चतुर्थः पादः ।

अथातोऽष्टौ द्वन्द्वान्युलूखलमुसले उलूखलं व्याख्यातं मुसलं मुहुः सरन्तयोरेषा भवति ॥ १(३५) ॥

"अथातोष्टौ द्वन्द्वानि"—इति, अश्वादेः पूर्वस्माद् वर्गात् विलक्षणोऽयमपरो द्वन्द्ववर्ग इति पृथगधिकारवचनम्। अथातः-शब्दावुक्तार्थौ। अष्टावित्यनिर्देशतोऽपि सिद्धेऽष्टत्वनियमार्थमष्ट-ग्रहणम्। "उषासानक्ता" "दैव्या होतारा"—इति द्वन्द्वदर्शनात् अयुक्तमिति चेत्? न, तयोराप्रीत्वसामान्येन तत्र प्रथमं समाम्नातत्वात्, इह च पुनः समाम्नाने द्विरुक्ततादोषप्रसङ्गः। मित्रावरुणादीनामपि द्वन्द्वसामान्यादिह प्रसङ्गः इति चेत्? न, तेषां पृथगपि स्तुत्युपपत्तेः। एवं सति उलूखलमुसलयोः द्यावापृथिव्योश्चेह समाम्नानस्याप्रसङ्गः, केवलयोः स्तुत्युपपत्तेः? मुसलस्य दिवश्च पृथक्स्तुत्यभावात्, मित्रावरुणादीनान्तु सर्वेषां पृथक् स्तुतयः सन्ति, तस्मादसमाम्नानम्। अश्विनोरिह द्वन्द्वसामान्यात् प्राप्तमिति चेत्? न, उषःप्रभृतीनामुषस. कालमध्ये तेषाञ्च समाम्नानेनेहातिसङ्करप्रसङ्गात्। शुनासीरयो' स्थानान्यत्वात् इहासमाम्नानम् इति चेत्? न, द्वन्द्वसामान्यात्, पृथिव्यर्थत्वाच्च, सम्भोगाभिप्रायेण च तत्स्तुतेः—"तेनेमामुपसिञ्चतम्" इति। द्यावापृथिव्योः प्रथमं समाम्नानं देवताभावादिह प्राप्तमिति चेत्?

न, दिवः पृथिव्यायतनत्वाभावात्—द्वन्द्वप्रसङ्गेन चेह दिव समाम्नानात्। "द्यावापृथिव्यौ ३१" "शुनासीरौ ३४"—इति देवतामपेक्ष्य द्वन्द्वमध्ये प्रथमागामित्वस्यावचने उलूखलमुसलयो-र्द्रव्यत्वात् प्रथमं समाम्नानम्, तयोः पृथिव्यायतनत्वस्य निरुप-चारप्रसिद्धेः, प्रचुरत्वाच्च द्वन्द्वयोः। तयोः "उलूखलं व्याख्यातम्" "उरुकरम्"—इत्येवमादिना, "मुसलं=मुहु सरम्"। मुसलं कस्मात्? तद्धि मुहुर्मुहुः सरति व्रीह्यादिषु॥

"तयोः एषा भवति" स्तुतिः—॥ १ (३५)॥

आयजी वाजसातमा ता ह्यु१च्चा विजर्भृतः। हरी इवान्धांसि बप्सता॥ आयष्टव्ये अन्नानां सम्भक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने हविर्धाने हविषा-न्निधाने तयोरेषा भवति॥ २ (३६)॥

"आयजी वाजसातमा"—इति (ऋ० सं० १, २, ६६, २)। आभिमुख्येन मर्य्यादया वा "यष्टव्ये" पूज्ये, 'वाजसातमे' "अन्नाना सम्भक्ततमे" 'उच्चा विजर्भृतः' "उच्चैर्विह्रियेते" उलूखलमुच्छ्रीयते च, अवहननाय मुसलमुद्यस्यते, एतदुच्चैर्विहरणम्। ते एते नित्यम् अस्माकं गृहे 'हरी' अश्वौ 'इव'। नित्यमविच्छेदेन। 'अन्धांसि' "अन्नानि" 'बप्सत' "भुञ्जाने" संस्कारकत्वेन स्याताम्। —इत्येतदाशास्महे॥

"आयव्ये अन्नानां सम्भक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवा-न्नानि भुञ्जाने"। गतार्थमेतत् ॥

"हविर्द्धाने" = "हविषां निधाने" सोमास्तयोर्निधीयन्ते ॥

"तयोः एषा भवति" ॥ २ (३६) ॥

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः। इहाद्य सोमपीतये ॥ आसीदन्तु वामुपस्थ उपस्थाने यज्ञिया देवा यज्ञसम्पादिन इहाद्य सोमपानाय द्यावापृथिव्यौ व्याख्याते तयोरेषा भवति ॥ ३ (३७) ॥

"आ वामुपस्थमद्रुहा"—इति (ऋ० सं० २, ८, १०, ६)। गृत्समदस्यार्षम्। "द्यावा न. पृथिवी"—इति च। हविर्द्धान-प्रवर्त्तने विनियोगः। हे 'हविर्द्धाने!' 'अद्रुहा' अद्रोग्धव्ये युवामुच्येथे। यत्र युवामुपगम्य स्थिते तत् 'वाम्' 'उपस्थं' उपस्थाने 'यज्ञिया.' "यज्ञसम्पादिनः" 'देवा' 'इह' एतस्मिन् कर्मणि 'अद्य' उपगम्य 'सीदन्तु' निषीदन्तु 'सोमपीतये' "सोम-पानाय"।—इत्येतदाशास्महे ॥

"आसीदन्तु वामुपस्थ उपस्थाने यज्ञिया देवा यज्ञसम्पादिन इहाद्य सोमपानाय"। वर्णितमेतत् ॥

"द्यावापृथिव्यौ" "व्याख्याते"। द्यौश्च पृथिवी च इत्येते पदे व्याख्याते ॥

"तयोः" "एषा" स्तुतिः "भवति"—॥३ (३७) ॥

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम्। यज्ञं देवेषु यच्छताम्॥ द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छतां विपाट्च्छुतुद्र्यौ व्याख्याते, तयोरेषा भवति॥ ४ (३८)॥

"द्यावा नः पृथिवी"—इति (ऋ० सं० २, ८, १०, ५)। 'द्यावापृथिवी' "द्यावापृथिव्यो" 'नः' अस्माकम् 'सिध्रम्' "साधनम्" 'इमं' 'यज्ञं' सोऽयमस्मान् साधयति, 'अद्य' एतस्मिन् अहनि वर्त्तमानं 'दिविस्पृशं' द्यां यः स्पृशति पूरयति, तमेवङ्गुणं यज्ञं देवेषु 'यच्छताम्' "नियच्छताम्" देवेभ्यो दत्तम्।—इत्येतदाशास्महे॥

"द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम्"। गतार्थमेतत्॥

"विपाट्छुतुद्र्यौ" "व्याख्याते" "विपाट् विपाटनाद्वा"—इत्यत्र विपाट् व्याख्याता, "शुतुद्री=शुद्राविणी" इत्यत्र शुतुद्री "तद् यद् द्विवदुपरिष्टात् तद् व्याख्यास्यामः"—इति एतत्॥

"तयोः" "एषा" स्तुतिः "भवति"—॥ ४ (३८)॥

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने। गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते॥ पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव

विमुक्ते इति वा विषण्णे इति वा हासमाने हासति स्पर्द्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते आर्त्नी अर्त्तन्यौ वारण्यौ ञारिषण्यौ वा तयोरेषा भवति ॥ ५ (३६) ॥

"प्र पर्वतानाम्"—इति [(ऋ० सं० ३, २, १२, १)। विश्वामित्रो ब्रवीति। ये चैते "विपाट्छुतुद्र्यौ" 'पयसा' उदकेन पूर्णे 'प्रजवेते' प्रकृष्टेन जवेन गच्छतः 'पर्वतानाम्' उपस्थात् "उपस्थानात्" निर्झरात्, मेघानां वा। 'उशतो' 'उशत्यौ "कामयमाने" परस्परं समागमम्, समुद्रं वा। कथं प्रजवेते? 'अश्वे इव' 'विशिते' "विमुक्ते" मन्दुरातः, "विषण्णे इति वा" विभागेनैकस्मिन् मुक्ते, कस्मिंश्चिद् युक्ते युगादौ वा। 'हासमाने' स्पर्द्धमाने, परस्परेण हर्षमाणे वा हृष्यमाणे वा विपाट्छुतुद्र्यौ। 'गावा इव' "गावौ इव" 'शुभ्रे' "शोभने" कल्याण्यौ। 'मातरा' "मातरौ" "सं" 'रिहाणे' वत्समेकं प्रलेढुमिच्छन्त्यौ। य एवमेते प्रजवेते, ते अस्माकं गाधे भवत।—इत्येतदाशास्महे ॥

"पर्वतानामुपस्था०—०पयसा प्रजवेते"। उक्तोऽस्यार्थः ॥

"आर्त्नी" धनुःप्रान्ते। ते कस्मात्? "अर्त्तन्यौ वा" ऋतेर्धातोर्गत्यर्थस्य, गमयतस्ते इषून्, "अरण्यौ वा" अरणार्हौ, "अरिषण्यौ वा" हन्त्र्यौ वा ॥

"तयोः एषा भवति"—॥५ (३६) ॥

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे। अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान्॥ ते आचरन्त्यौ समनसाविव योषमातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्याविमित्राञ्छुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात्तयोरेषा भवति ॥ ६ (४०) ॥

"ते आचरन्ती समनेव"—इति (ऋ० सं० ५. १. १६, ४। य० वा० सं० २६, ४)। आर्त्न्योरेवानुमन्त्रणमश्वमेधे अनेन क्रियते। 'समना इव योषा' "समनसौ इव" एक भर्त्तृके योषिते यथैकं भर्त्तारं प्रत्याचरन्त्यौ भवतः परिष्वक्तुम्, एवमाकर्षारम् प्रति नित्यमाचरन्त्यौ भवतः आनमत्यौ। "मातेव पुत्रं बिभृतामुपस्थे" रक्षणाय ये बिभृतामाकर्षारम्। अमुना प्रकारेण ये विस्फुरन्त्यौ नित्यममित्रान् भवतः। ययोरेषः स्वभावः। ते 'आर्त्नी' नित्यम् अस्माकम् अमुना प्रकारेण 'संविदाने' संवादमिव कुर्वाणे। परस्परतः आकर्षणाभिप्रायमेतत्, आकृष्यमाणयोस्तयोः संवाद इव परस्परतो भवति। 'शत्रून्' 'अपविध्यताम्'। —इत्येतदाशास्महे॥

"शुनासीरौ"। "शुनः=वायुः, शु एति अन्तरिक्षे" शुना-

सीराविल्यत्र, स हि क्षिप्रमेत्यप्रतिवध्यमानोऽन्तरिक्षे। "सीरः = आदित्यः सरणात्" स हि नित्यं सरति गच्छति ॥

"तयोः एषा भवति"—॥ ६ (४०) ॥

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः। तेनेमामुपसिञ्चतम् ॥ इति सा निगदव्याख्याता देवी जोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा शस्यञ्च समा चेति कात्थक्यस्तयोरेष सम्प्रैषो भवति ॥ ७ (४१) ॥

"शुनासीराविमाम्"—इति (ऋ० सं०, ३, ८, १, ५। य० वा० सं० १२, ६९। अथ० सं० ३, १७, ७,)। "इति सा निगदव्याख्याता"। वामदेवस्यार्षम्। शुनासीर्य्ये विनियोगः। हे 'शुनासीरौ!' युवां 'वाचम् इमां' स्तुतिलक्षणां 'जुषेथाम्' सेवेथाम्। कथं च पुनरासेवितेयं युवाभ्यां स्यात? "यद् दिवि चक्रथु पयः"। 'यत्' 'दिवि' द्यु लोके 'चक्रथु', संभरथः युवाम् 'पयः' उदकम्। 'तेन' 'इमां' पृथिवीम् 'उपसिञ्चतम्'। एवमनेनासद्वागासेविता युवाभ्यां भविष्यतीति ॥

"देवी जोष्ट्री"—"देव्यौ जोषयित्र्यौ" सर्वस्य तर्पयित्र्यौ। के पुनस्ते? इति। "द्यावापृथिव्यौ" "अहोरात्रे वा" "शस्यं च समा च इति कात्थक्यः" शस्यं व्रीह्यादि, समेति संवत्सर ॥

"तयोः एषः सम्प्रैषो भवति"—॥ ८ (४१) ॥

देवी जोष्ट्री वसुधीती ययोरन्याघा द्वेषांसि यूयव-दन्यावक्षद्वसु वार्य्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥ देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधीती वसुधान्यौ· ययोरन्याघानि द्वेषांस्यवयावयत्यावहत्यन्या वसूनि वननीयानि यजमानाय वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति सम्प्रैषो देवी ऊर्जा-हुती देव्या ऊर्जाह्वान्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा शस्यञ्च समा चेति 'कात्थक्यस्तयोरेष सम्प्रैषो भवति ॥ ६ (४२) ॥

"देवी जोष्ट्री"—इति (य० वा० सं० २८, १५)। 'देवी जोष्ट्री' "देव्यौ जोषयित्र्यौ" "वसुधीती = वसुधान्यौ" वसूनां निधानभूते, 'ययोः' देव्योः अन्या एका 'अघा' "अघानि" 'द्वेषांसि' हन्ति यान्यप्रियाण्यस्माकं तानि "यूयवत्" "अवयाव-यति" अवमिश्रयति नाशयत्यस्मत्तः। 'अन्या' पुनः 'आवक्षत्' "आवहति"। 'वसु वार्य्याणि' "यजमानाय वननीयानि (वरणी-यानि) वसूनि" 'वसुवने' वसुधेयस्य' "वसुवननाय" च सम्भ-जनाय, "वसुधानाय" वसुविशिष्टस्य निधानाय च। ते देव्यौ जोषयित्र्यौ 'अस्य' पृषदाज्यस्य स्वमंशं 'वीताम्' "पिबेतां, काम-येतां वा"। मैत्रावरुणो ब्रवीति,—हे होतः! त्वम् एते 'यज'

—"इति सम्प्रैषः" ॥ "देव्यौ जोषयित्र्यौ०—०यजेति सम्प्रैषः" ।
एतस्यार्थउक्तः ॥ "देवी ऊर्जाहुती"="देव्यौ ऊर्जाहुत्यौ" ।
"द्यावापृथिव्यौ इति वा, अहोरात्रे इति वा, शस्यं च समा च
इति कात्थक्य." ॥ "

"तयोः एषः सम्प्रैषः भवति"—॥ ९ (४२) ॥

देवी ऊर्जाहुती इषमूर्जमन्यावक्षत् सग्धिं सपीतिमन्या
नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती
ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥ देवी
ऊर्जाहुती देव्या ऊर्जाह्वान्यावन्नञ्च रसञ्चावहत्यावह-
त्यन्या सहजग्धिञ्च सहपीतिञ्चान्या नवेन पूर्वं दयमानाः
स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां
वसुवननाय च वसुधानाय च वीतां पिवेतां कामयेतां वा
यजेति सम्प्रैषो यजेति सम्प्रैषः ॥१० (४३)॥

इति नवमाध्यायस्य चतुर्थः पादः ॥ ६, ४ ॥

"देवी ऊर्जाहुती"—इति (य० वा० सं० २८, १६)। "देव्यौ
ऊर्जाह्वान्यौ" ऊर्जस्य अन्नस्य निष्पादयित्र्यौ" द्यावापृथिव्यौ
ऊर्जाह्वान्यावुच्येते। 'इषम् ऊर्जम् आवक्षत्' "अन्नं च" अन्नादि-
"रसं च" व्रीह्यापसेचनं क्षीरादिकञ्च, 'सजग्धिं' एका उपनामि-
तस्यान्नस्य "सहपीतिम्" अन्या "सहजग्धिम्" सहभोजनं

बन्धुभिरिति 'आवक्षत्' "आवहति" आभिमुख्येन यथा बन्धुभिः सह भुञ्जीमहि तथा करोतु। तथा च तत् बह्वन्नमस्तु, यथा 'नवेन' 'पूर्वम्' पुराण "दयमाना" रक्षन्तः 'स्याम' 'पुराणेन नवम्' पुराणेन नवं धान्यं दयमानाः स्याम। तामेवलक्षणम् 'ऊर्जम्' 'ऊर्जाहुती' "ऊर्जयमाने" बलवती ऊर्जतां च कुर्वाणे 'अधाताम्' दत्ताम्। 'वसुधने' "वसुवननाय च" 'वसुधेयस्य' "वसुधानाय च" 'वीताम्' "पिबेतां कामयेता वा" ॥

'यज'—"इति सम्प्रैषः" इति ॥ ॥१० (४३) ॥

इति निरुक्तवृत्तौ चतुर्दशाध्यायस्य (नवमाध्यायस्य) चतुर्थः पादः ॥ ६, ४ ॥

जम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्य्यस्यकृ तौ ऋज्वर्थायां निरुक्तवृत्तौ चतुर्दशोऽध्यायः नवमोऽध्यायः समाप्तः ॥ ॥

(अथयान्यश्वोश्वोल्हामानोमित्रोकनिक्रदद्भद्रं वदसंव-[1] [2] [3] [4] [5] [6]

त्सरमुपप्रवदप्रावेपामाप्रैतेवदन्त्वमन्दानूयज्ञ संयोगाद्वनस्पत [7] [8] [9] [10] [11] [12]

उपश्वासयवहवीनामहिरिवरथेतिष्ठन् धन्वनागात्रक्ष्यन्तोवेदा [13] [14] [15] [16] [17] [18] [19]

सुपर्णमाजङ्घन्तियच्चिद्धिवृषभोन्यक्रन्दयन्निमन्तंपितुन्निमंम [20] [21] [22] [23] [24] [25] [26]

२७ २८ २९ ३० ३१ ३२
आपो हि ष्ठा या ओषधीरारात्र्यरण्यानिश्रद्धयाग्निः स्योना-
३३ ३४ ३५ ३६ ३७ ३८ ३९ ४०
मीपाश्चित्तमिहेन्द्राण्यथात आयज्यावांग्रावानःप्रपर्वतानान्त
४१ ४२ ४३
आचरन्तीशुनासीरौ देवीजोष्ट्रीदेवी ऊर्जाहुती त्रिचत्वा-
रिंशत् ॥)

इति निरुक्ते (उत्तरषट्के) नवमोऽध्यायः ॥९॥

---

## अथ दशमाध्ययास्य

### प्रथमः पादः ।

ॐ॥ अथातो मध्यस्थाना देवतास्तासां वायुः प्रथमा-
गामी भवति वायुर्वातेर्वेतेर्वा स्याद्गतिकर्मण. एतेरिति
स्थौलाष्ठीविर्गनर्थको वकारस्तस्यैषा भवति ॥ १ ॥

व्याख्यातानि पृथिवीस्थानदेवतापदानि, अधुना समाम्नाया-
नुक्रमेणैव मध्यमस्थानदेवतापदानि निर्वक्तव्यानि, तदर्थमिदमार-
भ्यते,—"अथातो मध्यस्थाना देवताः"—इति। अथशब्दो
विशेषाधिकारार्थः। अतःशब्द आनन्तर्य्यार्थः। मध्यं स्थान-
मेतासामिति मध्यस्थाना देवताः, वाय्वाद्याः 'वक्ष्यन्ते'—इति।

वाक्यशेषः। देवता इति बहुवचनं भेदपक्षे, एकैव, नैरुक्तानां देवतात्रित्वाभ्युपगमात् एतस्यैव मध्यमस्य पर्यायवचनान्येतानि वाय्वादीनि रोदस्यन्तानि गुणविशेषतो भवन्ति, यथैवोत्तमस्य ज्योतिषो दृश्यन्ते भगप्रभृतीनि॥

"तासां वायुः प्रथमागामी भवति"। नन्विन्द्र इति मध्यमस्य स्थानस्य मुख्यमभिधानम्, तत् प्रथमसमाम्नातव्यमासीत्? न, मध्यमस्य वर्षकर्मोपलक्षणत्वात्, वर्षकर्मणि च वायोरधिकारः प्रथमः स्यात्। कथम्? इति। वाय्वात्मनैव हि मध्यमः, ऊर्जान्मासात् परतः सार्वदिकमुदकमुपसंहरन्नोषधिवनस्पतिजलाशयेभ्यः उदकमन्तरिक्षलोकस्य गर्भमुपचिनोति, स मासाष्टकेन सम्भृतोदकगर्भो विपक्वः प्रावृषंप्राप्य प्रसवाय प्रकल्पते। तदुक्तम्—"वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे। तत पर्णरुहो वान्ति ततो देवः प्रवर्षति॥"—इति। तदेवं वर्षकर्मप्रारम्भे वाय्वात्मनैव मध्यमो व्याप्रियत इति युक्तं वाय्वभिधानमिह प्रथमं समाम्नातमिति। इतश्च युक्तं यदुच्यते "तासां वायुः प्रथमागामी भवति"—इति, स एष सम्भृतोदकगर्भो वायुर्विवृण्वन् मेघजालेन नभः, मध्यमो वरुणः, सम्पद्यते ततो रुदत् रुद्रः; तत इरां ददत् इन्द्रः, ततो रसान् प्राजेयत् पर्जन्यः। एवमादिर्मध्यमस्य जगदनुग्रहाय वर्षप्रदानसिद्धये गुणोपजनक्रमः। अनयैव गुणोपजनक्रमानुपूर्व्या वायुः १, वरुणः २, रुद्रः ३, पर्जन्यः ४,—इत्येवमाद्या समाम्नाये देवतानामानुपूर्वी। तदेतत् स्फुटं द्युस्थाने गुणान्तरोपजनानुपूर्व्यं ज्योतिर्मण्डलस्य सवितृप्रभृतिषु॥

"वायुः" कस्मात्? "वातेः" "वा गतिबन्धनयोः (अदा० प०)"—इत्यस्य, सततमसौ वाति गच्छति। "वेतेः वा स्याद् गतिकर्मणः" अनेकार्थो वेतिः, तस्य वा गत्यर्थस्य। "एतेः— इति स्थौलाष्ठीविः"। अस्मिन् पक्षे "अनर्थकः वकारः" उपजनमात्रम्, एत्यसौ इति वायुः॥

"तस्य एषा भवति"—॥ १॥

वायवायाहि दर्शतेमे सोमा अरङ्कृताः। तेषां पाहि श्रुधि हवम्॥ वायवायाहि दर्शनीयेमे सोमा अरङ्कृता अलङ्कृतास्तेषां पिब शृणु नोह्वानमिति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति॥ २॥

"वायवायाहि दर्शत"—इति (ऋ० सं० १, १, ३, १)। मधुच्छन्दस आर्षम्। आध्वर्य्यवे वायव्योपस्थाने विनियोगः, चाह्वन्ये प्रउगे शस्त्रे शस्यते। हे 'वायो!' 'दर्शत' "दर्शनीय!" दर्शनार्ह! त्वदर्थम् 'इमे' 'सोमाः' अस्माभिः 'अरङ्कृताः' "अलङ्कृताः" पर्य्याप्ताः पातुं संस्कृताः। स त्वमस्माकमिदम् 'हवम्' "आह्वानम्" 'श्रुधि' "शृणु"। श्रुत्वा च तत् 'आयाहि'। एत्य च 'तेषाम्' एतेषां सोमानां यः स्वोंऽशस्तव तं 'पाहि' "पिब"।— इत्येतदाशास्महे॥

वायोः सर्व्वस्थानतामपेक्ष्य विचारमागूर्य्य ततोऽवधारयति, —सर्व्वस्थानत्वेऽपि सति "कमन्यम्" इन्द्रात् "मध्यमात्"

तीक्ष्णायुधाय, स च इमा गिर उच्यमानाः 'शृणोतु' 'नः' अस्माकम् ।—इत्येतदाशास्महे ॥

"सहमानाय"—इति वल्कृते. मध्यमः ॥

"तस्य एषा अपरा भवति"—सा पुनः किमर्थम् ? "विधात्रे"—इत्युक्तं पूर्वस्यामृचि तत्रैतत् भवति—किमसौ विधत्ते ? इति, अतः परया निर्ब्रवीति—रक्षःपिशाचानिति ॥ ६ ॥

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः । सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥ या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि दिद्युद् द्यतेर्वा द्युतेर्वा द्योततेर्वा क्ष्मया चरति क्ष्मा पृथिवी तस्याञ्चरति तया चरति विक्ष्मापयन्ती चरतीति वा परिवृणक्तु नः सा सहस्रन्ते स्वाप्तवचन भैषज्यानि मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषस्तोकं तुद्यतेस्तनयं तनोतेरग्निरपि रुद्र उच्यते तस्यैषा भवति ॥ ७ ॥

"या ते दिद्युदवसृष्टा"—इति ( ऋ० सं० ५, ४, १३, ३) । हे भगवन्! 'या' 'ते' तव 'दिद्युत्' आयुधम्, ज्वरातीसारादिरोगाख्यम्, येन प्राणिनो हंसि । 'दिवस्परि' द्युलोकादधि त्वया 'अवसृष्टा' 'चरति' । सर्वैव हि देवता द्युस्थाना इति गम्यते, दिवस्परीति लिङ्गात्, कर्माधिकारस्थानानि तु विशिष्टानि—इति

तिसृणां त्रीणि कर्माधिकारस्थानानि नियतानि भवन्ति, अतएवो-क्तमग्न्यधिकारे द्युस्थानो भवति—इति। कथम्? या चरति दिद्युत्? 'क्ष्मया' पृथिव्या व्रीह्यादिभावमुपगतया, "तस्यां" व्रीह्यादिभावमुपगतायां पृथिव्यामनुप्रविश्य चरति अन्नपानसमुद्भूता तत्प्रभवत्वात् सर्वरोगाणाम्, तदुक्तम्,—"नमोऽस्तु रुद्रेभ्यो ये के च पृथिव्या येषामन्नं वातो वर्षमिषवः"—इति (य० वा० स० १६, ६६)। तस्याः किम्? दिद्युतः सा घ्नती प्राणिनोऽस्मान् 'परिवृणक्तु' 'परिवर्त्तयतु 'नः'। किमन्यदस्तु त्वत्तोऽस्माकम्? "सहस्रं ते स्वपिवात भेषजा"। हे 'स्वपिवात' "स्वाप्तवचन!" कस्यचिदपि अनतिक्रमणीयाज्ञ! यानि तव 'सहस्रं' 'भेषजा' "भैषज्यानि" यैर्बहुभिः बहुप्रकारम् भेषज करोषि भक्तानाम् तान्यस्मान् प्रति सन्तु। किञ्च, 'मा नः' मा अस्माकम् तोकेषु' "पुत्रेषु" "तनयेषु" "पौत्रेषु च" 'रीरिषः' हिंसां नो मा प्रयुङ्क्ष्व।—इत्येतदाशास्महे॥

"दिद्युत्"—"द्युतेः वा" अवखण्डनार्थस्य (दि० प०), "द्युते वा" दीप्त्यर्थस्य (भ्वा० प०)। "विक्ष्मापयन्ती चरतीति वा" हिंसन्ती चरतीति वा। "तोकम्"—इति पुत्रः, स हि नित्यं पित्रा विनयता तुद्यते इदं कुर्विदं मा कार्षीरिति। "तनयम्"—"तनोतेः" पौत्रम्, तद्ध्यतितरां पितुः सकाशात् ततं भवति। सत्यप्ययत्यनामत्वाविशेषे इहाजामितैव विशेषः। एवमन्यत्रापि समानार्थानामेकवाक्ये विशेष उपेक्ष्य इति दर्शयति॥

"अग्नि अपि रुद्रः उच्यते"—इति। विचारानुस्मृतये सङ्क्षेपप्रदर्शनम्॥

"तस्य" "एषा" "भवति" अग्नेः रुद्रस्य—॥ ७॥

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय। स्तोमं रुद्राय दृशीकम्॥ जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तां बोधतया बोधयितरिति वा तद्विविड्ढि तत् कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयमिन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति धारयत इति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदं करणादित्याग्रयण इदं दर्शनादित्यौपमन्यव इदन्तेर्वैश्वर्य्यकर्मण इदञ्छत्रूणां दारयिता वा द्रावयिता वादरयिता च यज्वनां तस्यैषा भवति॥ ८॥

"जरा बोध"—इति। (ऋ० सं० १, २, २३, ५। सा० सं० छ० आ० १, १, २, ५)। शुनःशेपस्यार्षम् "अश्व न त्वा वारन्तम्"—इति (ऋ० सं० १ म० ६ अनु० ४ सू०)। एतस्मिन् सूक्ते प्रातरनुवाके विनियोगः। येयं मया तव 'जरा' स्तुतिरुच्यते, भगवन्नग्ने! रुद्र! तां त्वं 'बोध' बुध्यस्व। अथवा हे जराबोधयितः! स हि जरया स्तुत्या होतृत्वे वर्त्तमानोऽभिम-

त्तमर्थं यजमानानां सम्पादयन् देवान् बोधयति। 'तत् विविड्ढि' तत् कुरु" 'विशेविशे' मनुष्याय, 'यज्ञियाय' यज्ञसम्पादिने जनाय; यत् त्वया यज्ञे कर्त्तव्यम्, ततः तुभ्यं रुद्राय देवानां स्तोत्रे स मनुष्यः 'दृशीकम्' "दर्शनीयम्" श्रवणीयम्, श्रवणार्हम् व्यपगत-दोषं स्तोत्रमुच्चारयिष्यति॥ "यो अग्नौ रुद्रो यो अप्स्व १न्तर्य ओषधीर्वीरुध आविवेश। य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये॥"—इति (अथ० सं० ७, ८७, १)।

"इन्द्र" कस्मात्? "इरां दृणाति—इति वा" इराम् अन्नं व्रीह्यादि, दृणाति विदारयति. इराशब्दात् पूर्वपदम्, दृणातेरुत्तर-पदम्, वर्षक्लेदितमङ्कुर बीज भिनत्ति, तमिन्द्रकारितम्, सोऽयम् "इरादारः सन् इन्द्रः"—इति परोक्षेणोच्यते, यथा "अग्रणीः सन्नग्निः"—इति। विज्ञायते हि "परोक्षप्रिया इव हि देवाः प्रत्य-क्षद्विषः"—इति। सर्वत्रैवं देवताभिधेयेष्वभिधानत एव हि देवता आत्मनस्तत्त्वमन्तर्णीय व्यवधाय आत्मानमविदुषां परो-क्षीकृत्य नित्य वर्त्तते, तां तु विद्वांसस्तदभिधानव्युत्पत्तिद्वारेण विवृत्य दैवेन चक्षुषा मनसोपजातदिव्यदृष्टयो दृष्ट्वा ताद्गात्म्यं प्रतिपद्यन्ते इति तदभिधानव्युत्पत्तौ कृत्स्नः पुरुषार्थ आहितः। इन्द्रश्च भूयिष्ठभाग् प्राणदेवतानामुभयोरध्यात्माधिदैवतयोरिति तदभिधानमाचार्योऽतितरां निरवोचत्। "इरां ददाति—इति वा"। तदेव पूर्वपदम्, ददातिरुत्तरपदम्। यो वर्षद्वारेणासौ इरामन्नं ददाति। सोऽयम् इरादः=इरादाता=इन्द्रः। "इरां दधाति—इति वा"। तदेव पूर्वपदम्, दधातेर्दानार्थस्य धार-

णार्थस्य वा उत्तरपदम्। सोऽयम् इराधः = इराधारयिता = इन्द्रः। "इरा दारयति—इति वा"। तदेव पूर्वपदम्, दारयतेरुत्तरपदम्। सोऽयम् इरादारयिता = इन्द्रः। "इन्दवे द्रवति—इति वा"। इन्दुशब्दात् पूर्वपदम्, द्रवतेरुत्तरपदम्। इन्दुः सोमः, तं पातुमसौ द्रवति, द्रवतिर्गत्यर्थः, सोमपानार्थमसौ द्रवतीति। सोऽयम् इन्दुद्रवः = इन्द्रः।

"इन्दौ रमते—इति वा"। क्रीडत्ययं सोमे इतीन्द्रः। "इन्धे भूतानि—इति वा"। "ञि इन्धी दीप्तौ"—इत्यस्य। भूतानि ह्यसावग्नेोत्पत्त्याधिदैवस्थोऽध्यात्मस्थो वाऽभ्यवहारयन् विभजमानश्च दीपयति द्युतिमन्ति करोति। सोऽयम् इन्धः = इन्द्रः। "तत्" इदमपरमिन्द्रस्य इन्द्रत्वं ब्राह्मणे उच्यते।—"यदेनं" मध्यतोऽवस्थित शरीरस्य "प्राणैः" प्राणभावेन विष्टभ्येतरान् प्राणान् वागादीनितरप्राणवृत्तिमाहाभाग्यसम्प्रदानेन यदहं विशिष्टोऽस्मि त्वं तद्विशिष्टोऽसीत्येवमादीना प्राणाधिदेवताः "समैन्धन्" समदीपयन् सन्तानार्थं "तदिन्द्रस्येन्द्रत्वमिति विज्ञायते"। इन्धे भूतानीति कर्त्तरि, प्राणैरेनं समैन्धतेति कर्मणि। "इदङ्करणात् —इति आग्रयणः"। इद शब्दात् पूर्वपदम्, करोतेरुत्तरपदम्, इदमसौ सर्वमकरोदिति। सोऽयम् "इदङ्करः = इन्द्रः"। "इदन्दर्शनात्—इति औपमन्यवः"। इदं पूर्वपदम्, दृशिरुत्तरपदम्,

: सर्वमत। सोयम् "इदन्दर्शी–इन्द्रः"।

"इन्दतेः वा ऐश्वर्यकर्मणः"। इन्देः पूर्वपदम्, द्रवतेः द्रावयते: वा उत्तरपदम्। किमसौ द्रवति, दारयति वा"?

इति । "शत्रूणां दारयिता वा, द्रावयिता वा" । किमुक्तं भवति ? ईश्वरश्चासौ द्रावयिता शत्रूणाम्, अथवा ईश्वरश्चासौ दारयिता च शत्रूणाम्, अथवा ईश्वरश्चासौ "आदरयिता च यज्वनाम्" आदरकर्त्ता यज्वनामुपरि ॥

"तस्य एषा भवति"—॥ ८ ॥

अदर्दरुत्समसृजो विखानि त्वमर्णवान् बद्बधानाँ अरम्णाः । महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥ अदृणा उत्समुत्स उत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा । व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान्माध्यमिकान् संस्त्यायान् बावध्यमानानरम्णा रम्णातिः संयमनकर्मा विसर्जनकर्मा वा महान्तमिन्द्र पर्वतं मेघं यद्व्यवृणोर्व्यसृजोऽस्य धारा अवहन्नेनं दानवं दानकर्माणं तस्यैषापरा भवति ॥ ९ ॥

"अदर्दरुत्सम्"—इति (ऋ० सं० ४, १, ३२, १ । सा० सं० छ० आ० ४, १, ३, ३) । गातोरात्रेयस्यार्षम् । "उत्सः" मेघः । स कस्मात् ? "उत्सदनाद् वा" उतपूर्वस्य सदेः, ऊर्द्धमसौ सन्न इत्युत्सः । उतपूर्वस्य वा स्यन्दतेः, उपर्य्यसाववस्थितः स्यन्दतीत्युत्सः । उनत्तेः वा" "उन्दी क्लेदने ( रु० प० )"—इत्यस्य, क्लेदयत्यसौ । तम् "उत्सम्" मेघं हे भगवन् ! 'इन्द्रः' ! त्वम्

'अदर्दः', दारितवानसि त्वम्। दारयित्वा च जर्जरीकृत्य तस्य उत्सस्य 'असृजः' 'विखानि' विलानि विवृतानि त्वमकरोः। उदकनिर्गमनद्वाराणि स त्वममुना प्रकारेण 'अर्णवान्' "अर्णस्वतः" अर्णसा उदकेन तद्वतः, "एतान् माध्यमिकान्" "संस्त्यायान्" मेघसङ्घातान्, उदकभारेणातिगुरुणा "बाध्यमानान्" यथाकालम् 'अरम्णाः' विसृष्टवानसि। "रम्णातिर्धातुः" "संयमनकर्मा" अन्यत्र, तद्यथा—"सविता यन्त्रैः पृथिवीमरम्णात्" (ऋ० सं ८, ८, ७, १)। इत्यत्र, इह पुनर्मेघविदारणसम्बन्धात् "विसर्जनकर्मा"। किञ्च, 'महान्तम्' योऽप्यतिमहान् पर्वतो मेघः, केनचिदप्यन्येनाशक्यो विवृतद्वारः कर्त्तुम्, तमपि 'वि यद् वः' "यद् व्यवृणोः" विवृतम् अपावृतोदकनिर्गमनद्वारमकरोः। विवृत्य च 'सृजः विधाराः', "व्यसृज धाराः" त्वं उदकधाराः पुनः पुनः 'अवहन्' अवघ्नन् 'दानवम्' उदकदातारं मेघम्। य एतदकार्षीः त्वं स इदं नामास्माकं कुरुष्वेति॥

"तस्याः" "एषा" अपरा "भवति"—। सा पुनः किमर्थम्? उक्तं हि "अथास्य कर्म—रसानुप्रदानम्, वृत्रवधः, या च का च बलकृतिः" इति, तदेतदिह रसानुप्रदानं वृत्रवधश्च दर्शितम्, बलकृत्युपप्रदर्शनार्थमपर उदाह्रियते—॥ ६॥

यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः॥ यो जायमान एव प्रथमो मनस्वी

देवो देवान् क्रतुना कर्मणा पर्य्यभवत् पर्य्यगृह्णात् पर्य्यरक्ष-
दत्यक्रमादिति वा यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां
नृमृणस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टा-
र्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता पर्जन्यस्तृपेराद्यन्तविपरीतस्य
तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा
रसानां तस्यैषा भवति ॥ १० ॥

"यो जात एव प्रथमः"—इति (ऋ० सं० २, ६, ७, १)।
गृत्समदस्यार्षम्। इन्द्राय नमस्वते पुरोडाशः, तस्य याज्या।
गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना
जिघांसवोऽसुराः किल मरुद्गणैः विनाकृतोऽयमिदानीमेकः शक्यो
हन्तुमिति परिवव्रिरे, स किल भीतोऽनेन सूक्तेनेन्द्रं तुष्टाव,—
आत्मानञ्च ब्राह्मणं परेभ्यः प्रतिवेदयाञ्चकार।—

'यः' 'जातः एव' जातमात्र एव 'प्रथमः' मुख्यः सर्वभूतानां
प्रति मुख्यतां सम्पेदे। "मनस्वी" च मेधावी अन्ये हि कालेन
मुख्याः सम्पद्यन्ते मेधाविनश्च। "देवो देवान् क्रतुना पर्य्यभू-
षत्"। सत्यपि देवत्वाविशेषे इतरान् 'देवान्' 'क्रतुना' "कर्मणा"
'पर्य्यभूषत्' "पर्य्यगृह्णात्" परिगृहीतवान् स्वामित्वेन, "पर्य्यर-
क्षद्वा" मुख्यत्वात्, "अत्यक्रामत् वा" प्रभावेण। 'यस्य' च
'शुष्मात्' शारीरात् "बलात्" 'रोदसी' "द्यावापृथिव्यौ अपि"
'अभ्यसेताम्' "अबिभीताम्"। 'नृमृणस्य 'मह्ना' "बलस्य"

सेनालक्षणस्य "महत्त्वेन" अतिमहद्सह्यमस्य वलमवश्यमयमावां सादयिष्यतीत्येवमतिमहत्यावेते द्यावापृथिव्याववि‍भीतां यस्य शुष्मात्। 'जनासः!' हे असुरजना! 'स इन्द्रः' नाहमिन्द्रः, ब्राह्मणोऽहम् तत् प्रसादादेवासतद्रूप इति ॥

"ऋषेः दृष्टार्थस्य" अनुभूतेन्द्रमैत्रस्येन्द्रवयस्यस्य गृत्समदस्य इन्द्रं प्रति "प्रीति" स्तुतिः "भवति" "आख्यानसंयुक्ता" आख्यानसम्बन्धात्। अतश्च दर्शयति मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषय इति। अथवा "दृष्टार्थस्य" —इति देवतार्थम्, स तत्त्वतो दृष्टवता भावितान्तः-करणस्य "प्रीतेः" अतिहर्षात् "आख्यानसंयुक्ता" अन्येभ्य कथन-संयुक्तेत्यर्थः ॥

"पर्जन्यः" "तृपेराद्यन्तविपरीतस्य"। "तृप तृप्तौ (दि० प०)" —इत्यस्य धातो.। स कथं भवति? आद्यन्तविपर्य्ययेण। अतस्तमाद्यन्तविपर्य्ययं स्वयमेव दर्शयति,—"तर्पयिता" स एव भवति। किम् ऐकदेशिकः। न-इत्युच्यते,—"जन्यः" सर्वजनपद्तर्पयिता। अथवैवमन्यथा स्यात्,—"परो जेता वा" परः प्रकृष्टो जेता पर्जन्यः, परशब्दात् पूर्वपदम्, जयतेरुत्तरपदम्। "परो जनयिता वा" प्रकृष्टो जनयिता, तदेव पूर्वपदम्, जनयतेरुत्तर पदम्। 'प्रार्जयिता वा" कस्य? "रसानाम्" प्रपूर्वस्यार्जयतेः पर्जन्य', स हि रसान् प्रकटीकरोति।

"तस्य एषा भवति"—॥ १० ॥

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात्। उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः॥ विहन्ति वृक्षान् विहन्ति च रक्षांसि सर्वाणि चास्माद् भूतानि बिभ्यति महावधान्महान् ह्यस्य वधोऽप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतो बृहस्पतिर्ब्रहतः पाता वा पालयिता वा तस्यैषा भवति॥ ११॥

"वि वृक्षान् हन्ति"—इति (ऋ० सं० ४, ४, २७, २)। अत्रेरार्षम्। कारीर्य्यां दिगुपस्थाने विनियोगः। वि वृक्षान् हन्ति' "वहिन्ति वृक्षान्" 'पर्जन्यः' अशनिपातैः। कदा? यदा तस्करादीन् अनाकालप्रभवान् 'दुष्कृत' "पापकृतः" वर्षेण ओषधीरभिनिष्पादयन् 'स्तनयन्' 'हन्ति' उपशमयति, सुभिक्षं कुर्वन्, तदा। "विहन्ति च रक्षांसि" विविधं हन्ति क्रूरकर्मणः। "विश्वं बिभाय' "सर्वाणि चास्माद्भूतानि बिभ्यति 'महावधात्' पर्जन्यात्। कथम्? "उत अनागा ईषते" एवं नाम महावधात् अस्मात् सर्वाणि भूतानि बिभ्यति, येन 'अनागाः अपि' "अनपराधोऽपि" सन् सर्व एव "अस्मात्" "वर्षकर्मवत." स्तनयित्नुशब्दैरशनि मुञ्चतः 'ईषते' "पलायते" मामय 'स्तनयन् हन्ति'—इति मन्यमानः। सोऽयमेवमतिमहानुभावो भगवान् पर्जन्यः, स वर्षत्वस्माकमिति॥

"बृहस्पतिः" कस्मात्? "बृहतः पाता वा पालयिता वा" 'बृहतः' महतोऽस्य जगतः उदकस्य वा 'पाता' रक्षिता, 'पालयिता' अपि रक्षितैव, धात्वन्यत्वमर्थैकत्वम् ॥

"तस्य एषा भवति" ॥ ११ ॥

अश्नापिनद्धं मधु पर्य्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम्। निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणा विकृत्य ॥ अशनवता मेघेनापिनद्धं मधु पर्य्यपश्यन्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तच्चमसमिव वृक्षाच्चमसः कस्माच्चमन्त्यस्मिन्निति बृहस्पतिर्विरवेण शब्देन विकृत्य ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा तस्यैषा भवति ॥ १२ ॥

"अश्नापिनद्धम्" - इति (ऋ० सं० ८, २, १८, २)। अयास्यस्याङ्गिरसस्यार्षम्। 'अश्ना' "अशनवता" व्यापनवता "मेघेन" 'अपिनद्धम्' आत्मनो मध्यमतिनीय नद्ध बद्धं विवृत व्यवहितमदृश्यमन्यैः, 'बृहस्पतिः' 'मधु' उदकम् "पर्य्यपश्यत्" स 'तोऽपश्यत्। कथम्? "मत्स्यं न दीन उदनि क्षियन्तम्"। 'मत्स्यम्' 'न' "इव" 'दीने' 'उदनि' "उदके" उपक्षीयमाणप्राये 'क्षियन्तं' "निवसन्तम्" यथा मत्स्यबन्धोऽल्पउदके जिघृक्षुर्मत्स्यं परिपश्येच्छक्यो गृहीतुमयमिति, एवं पर्य्यपश्यत्। "निष्टज्जभार चमसं न वृक्षात्"। तच्च मधु दृष्ट्वा 'निर्जभार' "निर्जहार" निर्हृतवान्,

कथम् 'चमसं न वृक्षात्' यथा कश्चित् कुशल॰ शिल्पी वृक्षमध्यात् 'चमस यज्ञपात्र निर्हरेत् निष्पादयेत्, एवं निर्जहार वृहस्पतिः। अतएवोद्कनिर्हरणात् मध्यमः। कथमसौ निर्जहार? 'विरवेण विकृत्य' भीषणेन अतिमहता रवेण 'शब्देन" सङ्क्षोभ्य मेघम्, त्वस्तसर्वाङ्गसन्धिवन्धनं कृत्वा विकृत्रम्, तत एवं विह्वलीभूतं विकृत्य समन्ततो विशकलीकृत्य। एवं निर्जहार मधुयो वृह॰ स्पति, सोऽस्माकमपीदं करोत्विति॥

"चमस कस्मात्?" चमेर्भक्षणार्थस्य, तत्र हि सोमश्चम्यते॥

"ब्राह्मणस्पति." कस्मात्? "ब्रह्मणः पाता वा पालयिता वा" ब्रह्म = अन्नम्, ऋगादि वा तस्योभयस्याप्यसौ वर्षेणौपधीरभिनि॰ ष्पादयिता सम्पद्यते, वर्षाभावे ह्येतदुभयमुत्सीदति॥

"तस्य एषा भवति"॥ १२॥

अश्मास्यमवतं ब्रह्मणस्पतिर्मधु धारमभि यमोजसातृ-णत्। तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्-समुद्रिणम्॥ अशनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पति-र्मधुधारमभि यमोजसा बलेनाभ्यतृणत् तमेव सर्वे पिबन्ति रश्मयः सूर्य्यदृशो बह्वेनं सह सिञ्चन्त्युत्समुद्रिणमुदकव-न्तम्॥ १३॥

इति दशमाध्यायस्य प्रथमः पादः॥ १०, १॥

"अश्मास्यमवतम्"—इति (ऋ० सं० २, ७, १, ४)। गृत्समदस्यार्षम्। अश्मशब्दात् "अशनवन्तम्"—इति, आस्यशब्दात् "आस्यन्दनवन्तम्"-इति भाष्यकारश्चकार, तथा सामर्थ्यमपेक्ष्य। किमुक्तं भवति? उदकव्यापनक्रियया तद्वन्तम्, आस्यन्दनक्रियया चोदकप्रक्षरणक्रियया तद्वन्तम्। 'अश्मास्यम्' मेघम् 'मधुधारम्' उदकं धारयितारं 'यम्' 'ओजसा' "बलेन" "अभ्यतृणत्" अभ्यहनत् 'ब्रह्मणस्पतिः' 'तम्' 'अवतम्' "अपातितम्" अवाङ्गतितं भूमिम् उदकभावेन गतम्, पुनरादानकालमुदकस्य प्राप्य 'तम् एव' 'विश्वे' "सर्वे" 'पपिरे' "पिबन्ति" तदुदकमाददते। के पुनस्ते? 'स्वर्दृशः' सूर्य्यस्य "रश्मयः" स्वरिव ये दृश्यन्ते, ते सूर्य्यसमानदर्शना', स्वर्भावेन वा सूर्य्यभावेन ये मण्डलीभूता दृश्यन्ते, ते पिबन्ति, पुनश्चप्राप्य तदुत्सर्गकालं 'बहुसाकम्' 'बहु' तत् उदकम्, 'साकम्' सहभूताः मण्डलात् अवाञ्चः आवृत्य "एनम्" अन्तरिक्षे, 'उत्सं' मेघम् 'उद्रिणम्' 'उदकवन्तम्" कुर्वन्तः 'सिञ्चति'। तञ्च पुनरेवं मेघयो ब्रह्मणस्पतिः लोकानुग्रहाय प्रतिसंवत्सरं तृणेढि, सोऽस्माकमिदं नाम करोत्विति ॥ १३ ॥

इति ऋज्वर्थाया निरुक्तवृत्तौ चतुर्दशाध्यायस्य

( दशमाध्यायस्य ) प्रथमः पादः ॥ १०, १ ॥

---

## द्वितीयः पादः ॥

क्षेत्रस्य पतिः क्षत्रं क्षियतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा तस्यैषा भवति ॥ १ (१४) ॥

"क्षेत्रस्य पति." कस्मात्? 'क्षेत्रम्" तावत् "क्षियतेः निवासकर्मणः" तदाश्रयेन हि ग्रामे क्षियन्ति निवसन्ति कुटुम्बिनः। "तस्य पाता वा पालयिता वा" मध्यमः तत्कर्मोपपत्तौ हि क्षेत्रस्य क्षेत्रत्वसाफल्यम्, यदा हि मध्यमेन वृष्टं भवति, अथ क्षेत्रं सफलं भवति। विगृहीतमेव समाम्नातम्, निगमे तथा दृष्टत्वात् ॥

"तस्य एषा भवति"—॥ १ (१४) ॥

क्षेत्रस्य पतिना वयं हितेनेव जयामसि। गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ क्षेत्रस्य पतिना वयं सुहितेनेव जयामो गामश्वं पुष्टं पोषयितृ चाहरेति। स नो मृळातीदृशे। बलेन वा धनेन वा मृळतिर्दानकर्मा पूजाकर्मा वा तस्यैषापरा भवति ॥ २ (१५) ॥

"क्षेत्रस्य पतिना वयम्"—इति (ऋ० सं० ३, ८, ६, १)। वामदेवस्यार्षम्। क्षेत्रस्य पतये चरोः पुरोऽनुवाक्या। 'क्षेत्रस्य पतिना' सुष्ठ 'हितेन' केनचिदाप्तेन मित्रेण इव संयुक्ताः सन्तः

'वयम्' "जयामः" गवाश्वादीनि धनानि पुष्टानि बलवन्ति पोषयितृणि पोषणाय समर्थानि उपनामितद्रव्याणां चास्माकं क्षेत्रस्य पतिना त्वत्प्रसादादेव तानि भोक्तुं शक्तिरस्तु। कथम्? इति। 'आ'—इत्यस्योपसर्गस्य सम्बन्धि क्रियापदमभ्याजहार भाष्यकारः "आहर"—इति। कोऽर्थः? उपजातशक्तयो वयमेवमाज्ञापयन्तः परिचारकानिदमाहरतेति सर्वद्रव्याणि यथाश्नवीमहि, तथा क्षेत्रस्य पतिरस्मान् मृडयतु। "मृलतिः दानकर्मा"। "ईदृशे" धनलाभाय भोगाय चास्मान् ददातु, धारयतु, नित्यं स्थिरान् करोतु।—इत्येतदाशास्महे॥

"तस्य एषा अपरा भवति"—सा पुनः किमर्थम्? यस्य चरोः एषा पुरोऽनुवाक्या, तत्र ब्राह्मणं भवति,—"इयं वै क्षेत्रं पृथिव्यस्यामदीनायां प्रतितिष्ठति"—इति, यतः परया वर्णलिङ्गयोपपादयति मध्यस्थानः क्षेत्रस्य पतिरिति, भक्तिमात्रं ब्राह्मणमिति॥ २ (१५)॥

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृलयन्तु॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति मधुश्चुतं घृतमिवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृलयन्तु मृलयतिरुपदयाकर्मा पूजाकर्मा वा तद्यत्समान्यामृचि समानाभिव्याहारं

भवति तज्जामि भवतीत्येकं मधुमन्तं मधुश्चुतमिति यथा यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरं हिरण्यरूपः स हिरण्यसंदृगिति यथा यथा कथा च विशेषोऽजामि भवतीत्यपरं मण्डूका इवोदकान् मण्डूका उदकादिवेति यथा। वास्तोष्पतिर्वास्तुर्वसतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा तस्यैषा भवति ॥२ (१६)॥

"क्षेत्रस्य पते"—इति (ऋ० सं० ३, ८, ६, २)। आर्षं यदेव पूर्वस्याः। विनियोगो महाव्रते, आदित्यै चरूपश्चतु. स्तनग्रह., तस्य तृतीयमनयर्चा गृह्यते। हे 'क्षेत्रस्य पते।' 'मधुमन्तम् ऊर्मिम्' मधुरं स्वादु उदकसङ्घातम्, 'धेनु'' यथा 'पयः' दोग्धि, एवम् 'अस्मासु' 'धुक्ष्व' प्रक्षर। किञ्च "मधुश्चुतं घृतमिव सुपूतम्' मधु इवयत मुहुर्मुहुःश्चोतति 'घृतमिव सुपूतम्' उदकमकलुषम्, तस्य दानेन "ऋतस्य नः पतयो मृडयन्तु"। 'ऋतस्य' उदकस्य 'पतयः' "पातारः" माध्यमिका देवाः क्षेत्रस्य पतिप्रमुखाः 'मृडयन्तु' नित्यमस्मान् रक्षन्तु पूजयन्तु वा॥

अतएव मन्त्रात् प्रसक्तमतः परं सर्वमन्त्रेषु जाम्यजामिता पदानां चिन्त्यते। जामीति पुनरुक्तस्य सञ्ज्ञा, सा पुनरियं निगमत एव। विज्ञायते हि—"जामि वा एतद् यज्ञे क्रियते, यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते"—इति। तदेतत् पुनरुक्तं द्विविधम्। समानशब्दार्थम्, असमानशब्दार्थञ्च। तत्र

समानशब्दार्थं नाम, यदेकमेव पदमेकार्थमेकस्मिन्नेव वाक्याधिकारे पुनरुच्यते। तद्यथा—"मन्म रेजति रक्षोहा मन्म रेजति"—इति (ऋ० सं० २, १, १७, १)। तदधिकृत्यान्यार्थाप्रति समाधानाशक्तौ वक्ष्यति—"अभ्यासे भूयांसमर्थं मन्यन्ते" —इति। यत् पुनरसमानार्थं पदमभ्यस्यते, तदपुनरुक्तमेव। यदसमानशब्दं समानार्थञ्च तदसुखप्रतिसमाधानमिति तदर्थमिहोपोद्घन्ति—

"तद्यत् समान्यामृचि"—इति। तदिति वाक्योपादाने। "यत्" "समान्यामृचि" एकस्यामृचि "समानाभिव्याहारं" पदं "भवति" समानमर्थमभिव्याहरति पदान्तरेण, यः कश्चित् पूर्वऽर्द्धर्चेऽभिहितोऽर्थः, तमेव उत्तरेऽर्द्धर्चेऽभिदधत् जामि भवति। तत् "यथा—'मधुमन्तं मधुश्चुतम्'—इति"। यो हि मधुश्चुत् अवश्यमसौ मधुमान्। "एकं" तावत् आचार्य्यंतम्॥

"यदेव समाने पादे समानाभिव्याहारं भवति, तज्जामि भवतीत्यपरम्"। नानार्द्धर्चगतयोः समानार्थयोरपि पदयोरसमानपदान्तरव्यवधानात् प्रकृतार्थानुस्मृतये पुनरनुकीर्त्तनमजाम्येव, किन्तु यदेव समाने पदे एकस्मिन् पदान्तरेण व्यवहितं पदं समानार्थं पुनरुच्यते, अविच्छिन्नप्रसक्तानुस्मृति, तदेव जामीत्यपरम्। "हिरण्यरूपः स हिरण्यसन्दृक्—इति यथा"—इति (ऋ० सं० २, ७, २३, ५)। यो हिरण्यरूपः सोऽवश्यं हिरण्यसन्दृक्॥

तत् किं पौनरुक्त्येन योऽयं पदम्, तत्संयोगाद्वा तदसाधु मन्त्रवाक्यम्? न—इति, उच्यते—"यथा कथा च विशेषोऽ

जामि भवतीत्यपरम्" । यथा कथञ्चिन् य `कश्चित् स्वल्पोऽपि हि तत्र विशेषो वक्तव्य', दृष्टानुविधानाच्छन्दसः, अर्थानुविधाने यतेतै वम् । येन केनचित् स्वल्पेनापि विशेषेन तदजामि- भवतीत्य- परम् । अपरे पुनः कृतवाक्यार्थपरिसमाप्त्यतिरिक्तं पदं पुनरभ्य- स्समानं निपातवत् पादपूरणत्वेनार्थवदिति प्रति समादधते । तदेतदत्रगतं भवति, इदमेव त्वभीष्टमाचार्य्यस्य—"यथा कथा च विशेष " इति । तदर्थमुदाहरति—"मण्डूका इवोदकान् मण्डूका उदकादिव"—इति यथा"—इति (ऋ० स० ८, ८, २४, ५) एव मादिषु यथा समानशब्देषु असमानशब्देषु च पुनरुक्तेषुयः कश्चि- द्विशेषोवक्तव्यः ॥

स कथम् ? इति मन्त्रमेव त व्याचक्ष्महे । यत्रैष पादः-- "योगक्षेमं च आदाय" इति ? (ऋ० सं० ८, ८, २४, ५) । ऋषभस्यार्षम् । कामतो देवता कल्प्याः । विद्विष उच्यते-- "योगक्षेमं च आदायाहं भूयासमुत्तम आ वो मर्द्धानमक्रमीम् । अधस्पदान्म उद्वदत मण्डूका इवोदकान् मण्डूका उदकादिव ॥" इति । योगो नाम लिप्सितार्थस्य प्राप्तिः, क्षेमो नाम तत्परिपालनम् । हे विद्विषः ! एतत् उभयं भवद्भ्य आदाय मदधीनसर्वयोगक्षेमात् युष्मान् कृत्वा सर्वार्थेऽपि 'अहं भूयासम्' 'उत्तमः' उत्कृष्टः युष्माकम् । 'आ वो मर्द्धानकमक्रमीम्' । उपरि युष्मानधितिष्ठे- यम् । ते यूयमाक्रान्तमूर्द्धानो मया । 'मे' मम 'अधस्पदात्' पादयोरधो वर्त्तमानाः मन्मुखप्रेक्षाः अस्वाधीनसर्वार्थवृत्तयो भूत्वा नित्यम् 'आवदत' । कथम् ?'मण्डूका इवोदकात्' यथा मण्डूकाः

उदकात् ऋते नित्यमस्वाधीनवृत्तयो निर्वचनाः सम्पद्यन्ते एवं मद्दृते यूयं मा भूत। एवमत्रैकत्र विद्विषां निर्वाकृवे मण्डूका उपमानम्, अन्यत्र उदकाभावे मण्डूका यथा न भवन्ति, एवं मदभावे यूयमित्युदकमुपमानम्॥

एष विशेषः पूर्वयोरपि मन्त्रयोर्भवति,—कश्चित् मधुमान् न तु मधु अविरतं मुहुर्मुहुश्चोततीति, यथा "हिरण्यरूपः स हिरण्यसन्दृक्" इति, अत्र भवति कश्चिद्धिरण्यरूपः न तु हिरण्यमिव दृश्यमानः प्रिय इति विशेषः॥

"वास्तोष्पतिः" वक्तव्यः। स च पुनरेष रुद्रात्मना मध्यमो वास्तोष्पतिः। विज्ञायते हि वास्तोष्पतीये याथावर्य्यप्रतिपत्तौ गृहगमनमधिकृत्य—"न हीनमन्वाहरेयू रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयुः रुद्र भूतमन्वाहरेयुः"—इति। स एष गृहाधिदेवता रुद्रो वास्तोष्पतिः। स पुनः "अमीवहा"—इति वलकृतिलिङ्गात् मध्यमः॥

तस्य पूर्वपद विगृह्य निराह—"वास्तुः, वसतेः निवासकर्मण."। "वास्तु"—इति गृहमुच्यते, उष्यते हि तस्मिन् "तस्य" "पाता" रक्षिता, तदधिदेवताभावेन रुद्रात्मना च तत्कृतेनोपकारेण रक्षिता मध्यमः, इतरथा ह्य त्सीदेयुर्गृहाः॥

"तस्य एषा भवति—॥ ३ (१६)॥

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखा सुशेव एधि नः॥ अभ्यमनहा वास्तोष्पते सर्वाणि रूपा-

ण्याविशन् सखा नः सुसुखो भव शेव इति सुखनाम शिष्य-तेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः शिवमित्यप्यस्य भवति यद्यद्रूपं कामयते तत्तद्देवता भवति । रूपं रूपं मघवा बोभवीतीत्यपि निगमो भवति । वाचस्पति-र्वाचः पाता वा पालयिता वा तस्यैषा भवति ॥४ (१७)॥

"अमीवहा वास्तोष्पते"—इति (ऋ० स० ५, ४, २२, १) । वसिष्ठस्यार्षम् । गृहदारकास्थालीपाके यायावर्य्यप्रतिपत्तौ च वास्तोष्पतीयहोमे विनियोगः । हे भगवन्! 'वास्तोष्पते!' त्वम् अस्माकम् 'अमीवहा' भव । अमीवा रोगः, तस्य हन्ता । कथम्? 'विश्वा' "सर्वाणि" 'रूपाणि' 'आविशन्' । यस्य अस्मद्दुःखहेतोर्यः प्रतिपक्षः, सर्पादेर्नकुलादिः, तस्य रूपमाविशन् तं तमस्माकममीवानं जहि । अमुना प्रकारेण 'घ्नन्' अस्मदुपद्रवान् । 'सखा' मित्रम्, 'सुशेवः' सुष्ठु सुखः 'भव' । "शेव इति सुखनाम" । तत् कस्मात्? "शिष्यतेः वकारो नामकरणः" शिषिधातुः, वकारः प्रत्ययः । शिष इत्यस्य स पुनः "अन्तस्थान्तरोपलिङ्गी" अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः, न सञ्ज्ञा, यथा अन्तस्था यरलवाः । कश्च पुनरसौ? षकारः । तस्यान्तर-मवकाशस्थानम् उपलिङ्गयति उपगच्छति यः, स भवत्यन्तस्था-न्तरोपलिङ्गी । कश्च पुनरसौ? वकारः । स षकारस्य स्थान-मुपगच्छति । ततो गुणे कृते शेव इति भवति । स च पुनरेष

धातुः "विभाषितगुणः" इति "शिवम् इति अपि अस्य भवति" अगुणपक्षे ॥

"सर्वाणि रूपाण्याविशन्"—इत्यत्र प्रसक्तमुच्यते, शक्नोति पुनर्वास्तोष्पतिः सर्वाणि रूपाण्यावेष्टुमित्युच्यते—"यद्यद् रूपं कामयते तत्तद्देवता भवति"। अस्त्येतदैश्वर्यं देवताया. यद्यदिच्छति रूपं तत्तत् करोति, निगमोऽपि हि भवत्यैश्वर्य-प्रख्यापकः।—"रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्। त्रिर्यद्दिवः परि मुहूर्त्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा॥"—इति (ऋ० सं० ३, ३, २०, ३)। विश्वामित्रस्यार्षम्। यावन्ति कानिचिद्रूपाणि 'मघवा' इन्द्रो भवितुमिच्छति, तानि सर्वाण्यप्रतिबन्धेन 'बोभवीति' पुनः पुनर्भवतीति। कथम्? 'मायाः कृण्वानः' इदम्भवामीदम्भवामीत्येवम् 'तन्वं परि स्वां' तनुं तत्तदाकृत्यानेकविधां विकुर्वाणः। "त्रिर्यद्दिवः परि मुहूर्त्तमागात्"। 'दिवः परि' दिवः अधि द्युलोकात्, 'मुहूर्त्तं' मुहूर्त्तकालं प्रति 'यत्' यः 'त्रिः' 'आगात्' आगच्छति। स्वैर्मन्त्रैः' हूयमानो वा स्तूयमानो वा युगपद्यजमानानां यज्ञेषु। 'अनृतुपाः' अनियतसोमपानकाल, सर्वदा यागोत्पत्तेः। 'ऋतावा' ऋतवान् यज्ञवान्। येनासावेवमात्मानं विकरोत्येवं च दिवो मुहूर्त्तं त्रिरागच्छति। तेनासावचिन्त्यप्रभावत्वाच्छक्नोति तत्तद्रूपमावेष्टुम्॥

एवञ्च सुष्ठु यदेतदुच्यते—सर्वाणि रूपाण्याविशन्नमीवहा भवास्माकं त्वमिति॥

"वाचस्पति." वक्तव्यः। स पुनरेव "वाचः पाता वा पालयिता वा" प्राणात्मनेन्द्रः॥

"तस्य एषो भवति"—॥ ४ (१७)॥

पुनरेहि वाचस्पते देवेन मनसा सह। वसोष्पते निरामय मय्येव तन्वं १ मम॥ इति सा निगदव्याख्या-ख्यातापान्नपात्तनूनप्त्रा व्याख्यातस्तस्यैषा भवति॥ ५ (१८)॥

"पुनरेहि वाचस्पते"—इति। ( अथ० सं० १, १, २। ऋ० सं० १०, ६, १३, ७)। अपगतप्राणमिवात्मानं मन्यमानः पापकृत् पापसम्बन्धात् कुतश्चित् कृतानिर्णेजनः सन् प्राण ब्रवीति।—हे प्राण! 'पुनरेहि' त्वं मा प्रतीति। किम्पुनरेकाकी? न—इति, उच्यते,—'देवेन मनसा सह' सर्वेन्द्रियवृत्तिदीपकेन मनसा सह। एत्य च हे 'वसोष्पते" हे धनस्य अन्नस्य च पते! 'निरामय' नियमेन रमय। 'मयि एव' एतां 'तन्वं' 'मम' मा यासीर्मत्त इति। प्राणात् पृथग्भूतमात्मानं पश्यन् स्तोता ब्रवीति॥

"अपान्नपात्" "तनूनप्त्रा व्याख्यातः" शब्दनिर्वचनतः, अभिधेयतस्तु मध्यमः। अद्भ्य आदित्यः, ततो मध्यम., एवमपां पौत्रः॥

"तस्य एषा भवति"– ॥ ५ (१८)॥

यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईलते अध्व-रेषु। अपान्नपान्मधुमतीरपो दाया भिरिन्द्रो वावृधे वीर्याय॥ योऽनिध्मो दीदयद् दीप्यसेऽभ्यन्तरमप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सोऽपान्नपान्मधुमतीरपो देह्य-भिषवाय याभिरिन्द्रो वर्द्धते वीर्याय वीरकर्मणे यमो यच्छतीति सतस्तस्यैषा भवति॥ ६ (१६)॥

"यो अनिध्मो दीदयत्"—इति (ऋ० सं० ७, ७, २४, ४)। कवषस्यार्षम्। सर्व एव प्रत्यक्षकृतत्वेन गम्यते। हे 'अपान्न-पात्' 'यः' त्वम् 'अनिध्मः' अनिन्धनोऽपि 'दीदयत्' "दीप्यसे" 'अन्तः' "अभ्यन्तरं" प्रदेशं प्रति 'अप्सु' वर्त्तमानः। 'यम्' च त्वाम् 'अध्वरेषु' "यज्ञेषु" 'विप्रास' "मेधाविनः" 'ईलते' "स्तुवन्ति"। "स" त्वमपान्नपात् 'मधुमतीः' मधुररसाः मधु-रस्वादाः 'अपः' 'दाः' "देहि" "अभिषवाय"। 'याभिः' त्वमेव 'इन्द्रः' ईश्वरः सोमपानद्वारेण 'वावृधे' वर्द्धथाः 'वीर्याय' "वीर-कर्मणे"। इत्येतत् प्रार्थयामहे॥

"यमः" वक्तव्यः। स पुनरेषः "यच्छति" उपरमयति जीवितात् सर्वं भूतग्राममिति यमः। अतएव बलवान् इति मध्यमः॥

"तस्य एषा भवति"—॥६ (१६)॥

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्। वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥ परेयिवांसं पर्य्यागतवन्तं प्रवत उद्वतो निवत इत्यवतिर्गतिकर्मा बहुभ्यः पन्थानमनुपस्पाशयमानं वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्येति दुवस्यती राध्नोतिकर्माग्निरपि यम उच्यते तमेता ऋचोऽनुप्रवदन्ति ॥ ७ (२०) ॥

"परेयिवांसम्"—इति (ऋ० सं० ८, ६, २४, १)। यमस्यार्षम्। याम्ये पशौ वपायां विनियोगः। 'परेयिवांसम्' "पर्य्यागतवन्तम्" सर्वतः प्राप्तवन्तम्। कान् पुनः? 'प्रवतः' "उद्वतः" "निवतः" च भूतसङ्घातान्। 'प्रवतः'—इति मन्त्रे, "उद्वतो निवतः"—इति भाष्यकारोऽध्याजहार, तथा सामर्थ्यात्, 'प्रवतः' —मनुष्याः, "उद्वतः"—देवाः, "निवतः"—तिर्य्यञ्च, तथा गत्युपपत्तेः। तमेतमेवं 'महीः' महतीः भूतजातीः, परेयिवांसम्। 'बहुभ्यः' पुण्यकृद्भ्यः पापकृद्भ्यश्च 'पन्थाम्' "पन्थानम्" 'अनुपस्पशानम्' "अनुपस्पाशयमानम्" अमुना मार्गेण अयं प्राणी जीवनादुत्सर्पति, तमेतमेवङ्कर्माणम् 'वैवस्वतम्' विवस्वतः पुत्रम्, 'सङ्गमनं जनानाम्' सममेव चक्षुः कृत्वा योऽस्माल्लोकादमुं लोकं यथाकृतकर्मफलोपभोगवशेन जनान् गमयति। तमेव 'यमम्' 'राजानम्' ईश्वरं सर्वप्राणभृताम्, [illegible]हे

यजमान! 'हविषा' अनेन पशुलक्षणेन 'दुवस्य' राध्नुहि परिचरस्वेत्यर्थः॥

"अवतिर्गतिकर्मा"—इत्येतदत्र निर्वचनं कथं सम्बध्यत इति विज्ञातव्यम्, अथवा प्रवत इत्यवतिरेवायमादिलुप्तः प्रपूर्व इति भाष्यकाराभिप्रायः॥

तत्प्रसङ्गाद्वा शब्दसारूप्याद्वा निराह—"अग्निरपि यम उच्यते" इति विचारोपप्रदर्शनाय॥

"तम् एताः ऋचः अनुप्रवदन्ति"—इति प्रतिज्ञातार्थोपपादनाय, यथाग्निरपि यमशब्देन उच्यते, तथा इमा ऋचः अनुप्रवदन्ति—॥ ७. (२०)॥

सेने॑व सृ॒ष्टामं॑ दधा॒त्यस्तु॒र्न दि॒द्युत् त्वे॒षप्र॑तीका।
य॒मो ह॑ जा॒तो य॒मो जनि॑त्वं जा॒रः क॒नीनां॒ पति॒र्जनी॑नाम्।
तं व॑श्च॒राथा॑ व॒यं व॑स॒त्यास्तं॒ न गावो॒ नक्ष॑न्त इ॒द्धम्॥ इति द्विपदाः सेनेव सृष्टा भयं वा बलं वा दधात्यस्तुरिव दिद्युत् त्वेषप्रतीका भयप्रतीका बलप्रतीका महाप्रतीका दीप्तप्रतीका वा। य॒मो ह॑ जा॒त इन्द्रे॑ण स॒ह सं॒गतः। य॒मावि॒हेह मा॒तरे॑त्यपि नि॒गमो॑ भवति॥ यम इव जातो यमो जनिष्यमाणो जारः कनीनां जरयिता कन्यानां पतिर्जनीनां पालयिता जायानां तत्प्रधाना हि यज्ञसंयोगेन भवन्ति॥ तृतीयो

अग्निष्टे पतिरित्यपि निगमो भवति ॥ तं वध्रराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौषधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं भोगैर्मित्रः प्रमीतेस्त्रायते सम्मिन्वानो द्रवतीति वा मेदयतेर्वा तस्यैषा भवति ॥ ८ (२१) ॥

"सेनेव सृष्टा"—इत्येवमाद्याः (ऋ० सं० १, ५, १०, ७)। पराशरस्यार्षम्। एताः "द्विपदाः" विराजः। प्रातरनुवाका-श्विनयोः विनियोगः। 'सेना इव सृष्टा' निश्चिता, अथवा सेना-पतिना विसृष्टा प्रेरिता। 'अमं दधाति' "भयं वा बलं वा दधाति" भयं परेभ्यः, बलं स्वेभ्यः, अथवा अतर्किता भयं दधाति, अतर्किता बलं दधाति प्रणेतुः। 'अस्तुः न दिद्युत्' "अस्तु इव" क्षेप्तुर्यथा 'दिद्युत्' आयुधम् 'त्वेषप्रतीका' "महा-प्रतीका" महती या दृश्यते प्रतीकं दर्शनम्, "भयप्रतीका" दर्श-नादेव भयानका, "दीप्तप्रतीका वा" दीप्तदर्शना। भयं वा बलं वा ददाति स्वेभ्यः परेभ्यश्चेति वर्त्तते। का पुनरसौ ? इति, अग्नेः अर्चिः। रक्षोभ्यो भय ददाति, स्वेभ्यो बलम् ॥

"यमो ह जातो यमो जनित्वम्"—इति (ऋ० सं० १, ५, १०, ८)। यस्य इदम् एवलक्षणमर्चिः, स एव 'यमः' अग्निः सर्वमिदं जातं जनिष्यमाणञ्च। कथमेतद् गम्यते पार्थिवोऽ-ग्निर्यमशब्देनोच्यते न मध्यमो नोत्तमो वा ? इति। तावपि हि

यमावुच्येते, यतो निगमान्तरेण विभज्य दर्शयति—"यमाविह मातरा (ऋ० सं० ४, ८, २५, १)—इत्यपि निगमो भवति"—इति। यत्रैष पादः, तस्मिन् मन्त्रे शक्यते यमशब्देन अग्निरुच्यत इति विभावयितुं व्यपदेशः। तद्यथा ब - ळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ। समानो वां जनिता भ्रातरा युव यमाविहेह मातरा॥"—इति (ऋ० सं० ४, ८, २५, १)। भरद्वाजस्यार्षम्। बृहती। "बट्"—इति सत्यनाम। हे 'इन्द्राग्नी!' 'इत्था' सत्यम्, अमुना प्रकारेण यः सूक्ते महाभाग्यप्रकारोऽधिकृतः, तमित्थेत्यभिनयेनोपदिशन् ब्रवीति। 'महिमा' माहाभाग्यम् 'वां' युवयोः 'आपनिष्ठः' सर्वतोऽतिशयेन स्तुत्यः। यौ युवामेव मतिमहानुभावौ, तयोः 'समानः' 'वां' 'जनिता' जनयिता सूर्य्यः। तौ युवामेवङ्कृत्वैकपितृकौ एकजन्मानौ 'यमौ भ्रातरौ'। 'इह इह मातरौ' इह च पृथिवी लोके इह च अन्तरिक्षलोके अवस्थितौ मातारौ सर्वस्य लोकस्य निर्मातारौ। एवमिह मन्त्रे पितृत्वेन सूर्य्यो व्यपदिष्टः, इन्द्राग्नी यमौ इति यमशब्दौ मध्यमस्थानपृथिवीस्थानयोरत्रापि द्वयोर्यमयोरिह चेह च निर्माताराविति प्रथमेन 'इह' शब्देन अग्निर्यम इति लक्ष्यते, तस्मादिहापि "यमो ह जातो यमो जनित्वम्"—इति युक्तं यदग्निरेवोच्यते। "जारः कनीनां पतिर्जनीनाम्"। स एवाग्निः 'जारः' जरयिता' 'कनीनाम्' "कन्यानाम्" कन्याभावस्य, यदा ह्यग्निसन्निधावूढा भवन्ति, अथ तासां कन्याभावो जीर्णो भवति 'पतिः जनीनाम्' "पालयिता जायानाम्"। कथम्? "तत्प्रधानाः"।

मे मम अप्या नित्यमासन्ना प्रिया। सा च पुनराहितगर्भा यतः, अतो ब्रवीमि।—जनिष्टो अपः निश्चयेन जनिष्यते। अध्यपः अधिककर्मा। नर्य्यः नृभ्यो हितः सम्यक् परिपालयिता नराणाम्। अथवा मम नरस्यापत्यमायुर्नाम राजाय पुराणविद कथयन्ति। सुजातो मच्छुक्रात् वीर्य्यवतो जातः, विशेषत उर्वश्या क्षेत्रगुणात् सुजातरः। तस्य वावश्यमुर्वशी अस्मदसान्निध्येऽपि प्रवर्द्धयते तद्योग्यैः कर्मभिर्दीर्घमायुरिति॥

"पृथिवी" "व्याख्याता" "अथ वै दर्शनेन पृथुः"—इत्यत्र, इह तु माध्यमिका॥

"तस्या एषा भवति"—॥ २ (३६)॥

वलित्था पर्वतानां खिद्रम्बिभर्षि पृथिवि। प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि॥ सत्यं त्वं पर्वतानां मेघानां खेदनञ्छेदनं भेदनं वलममुत्र धारयसि पृथिवि प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन महतीत्युदकवतीति वेन्द्राणीन्द्रस्य पत्नी तस्या एषा भवति ॥ ३ (३७)॥

"वलित्था पर्वतानाम्"—इति (ऋ० सं० ४, ४, २६, १)। अत्रेरार्षम्। 'वल्—इति सत्यनाम। 'इत्था'—इति अमुत्रेत्यर्थः। हे 'पृथिवि' माध्यमिके! "सत्यं" यथाभूतम्, "अमुत्र" अमुष्मिन्नन्तरिक्षलोके वर्त्तमाना, 'खिद्रं' "खेदनं" "छेदनम्" येन

पर्वताः मेघांश्छेत्तुं शक्यन्ते, तद् "बलं" 'बिभर्षि' "धारयसि"। हे 'प्रवत्वति' "प्रवणवति" गमनवति! 'या' त्वं 'भूमिं' 'प्रजिनोषि' "प्रजिन्वसि" वर्षमुत्सृजन्ती, 'मह्ना' "महत्त्वेन" हे 'महिनि' "महति!" अथवा "उदकवति!"। या त्वमेवं भूमिं प्रजिन्वसि, सा कथं "मेघाना" पर्वतानां, छेदनसमर्थस्वल धारयिष्यसि? अवश्यं धारयसीत्यभिप्रायः॥

पृथिवि! त्वं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना। हिरण्यनाशेष्ट्यां भौमस्यैककपालस्येय याज्या। तत्र विज्ञायते —"अथ यद्भौमोऽस्यां हि स तदविन्दत्"—इति। तेन तत्रेयं भूमिरिज्यते, नच भूमिरस्यामृचि प्रधानत्वेन वर्त्तते यथा, चायमाचार्य्यो निराह। तदयमस्योदाहरणाभिप्रायः, स च विनियोगः,—इत्यविरोधोऽनयोर्मेधाविना समनुगंस्यते॥

"इन्द्राणी" "इन्द्रस्य पत्नी" इन्द्रस्य विभूति। पृथक्त्वेन निर्ज्ञाता पौराणिकैः॥

"तस्या एषा भवति"—॥ ३ (३७)॥

इन्द्राणी मासु नारिषु सुभगा महमश्रवम्। न ह्यस्या अपरञ्चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः॥

इन्द्राणीमासु नारिषु सुभगामहमश्रृणवं न ह्यस्या अपरामपि समां जरया म्रियते पतिः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमस्तस्या एषापरा भवति॥ ४ (३८)॥

"इन्द्राणीमासु नारिषु"—इति (ऋ० सं० ८, ४, ३, १)। वृषाकपेरार्षम्। पङ्क्तिः। पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियोगो निर्धार्य्य ब्रवीति।—सर्वास्वेव 'आसु नारिषु' इन्द्राणीम्' एव 'अह' 'सुभगां' सौभाग्ययुक्तां लक्षणवतीम् 'अश्रवम्' "अशृणवम्"। केन हेतुना? यत आह—"न ह्यस्या अपरञ्चन" हि शब्दो हेत्वर्थः, चनेत्यप्यर्थे। यस्मादस्याः अपरामपि "समा" सम्वत्सरं प्रति न कदाचिदपि 'पतिः' "म्रियते" नापि जीर्य्यते यथाऽन्यासां प्राकृतानां नारीणाम्। कतमः पतिः? विश्वस्मात्' "सर्वस्मात्" जगतो यः 'इन्द्रः' 'उत्तरः' योऽयमिन्द्र उद्गततरः "तमेतम्" इन्द्रमधिकृत्य "ब्रूमः"—इत्याचार्य्यो ब्रवीति॥

"तस्या एषा अपरा भवति"—। सा पुनः किमर्थम्? ऋषिः एव वृषाकपिः प्रसिद्धः, स पुनरादित्योऽभिप्रेतो नैरुक्तानाम्, तदुपप्रदर्शनायापरामाह॥ ४ (३८)॥

नाहमिन्द्राणिरारण सख्युर्वृषाकपेर्ऋते। यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः॥ नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्यं हविरप्सु शृतमद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमो गौरी रोचतेर्ज्वलतिकर्मणोऽयमपीतरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति तस्या एषा भवति॥ ५ (३९)॥

"नाहमिन्द्राणि"—इति (ऋ० सं० ८, ४, ३, १)। समानो विनियोगः पूर्वया, आर्षञ्च। इन्द्रो ब्रवीति।—विभक्तामिवेन्द्राणीमात्मनः कृत्वाह। "नाहमिन्द्राणि! रारण" "न रमे" अहं "सख्युर्वृषाकपेर्ऋते" य एष मम सखा वृषाकपिः, तस्मादृते। किं योऽय मृषिर्मनुष्येषु प्रसिद्धः? नेत्युच्यते "यस्येद मप्यं हविः"। "अप्सु शृतम्" चरुपुरोडाशादि वा "अद्भिः संस्कृतमिति वा"। सोऽस्य मे प्रिय इष्टः सर्वेष्वपि 'देवेषु' निर्द्धार्य्योच्यते। यस्य विशेषतो 'गच्छति'। विश्वस्मात्' "सर्वस्मात्" अपि जगतो योऽहम् 'इन्द्रः' 'उत्तर.' उद्गततरः, सेऽप्यहमेवं ब्रवीमीति॥

"गौरी" "रोचतेः" ज्वलत्यर्थस्य। माध्यमिका वाक्, सा पुनः दीप्तिमती। "अयमपीतरः" "यो "गौरो वर्णः" सोऽपि "एतस्मादेव" रोचतेः, स हि दीप्तिरूपत्वात् कृष्णादीनपेक्ष्य प्रशस्यो भवति"॥

"तस्याः एषा भवति"—॥ ५ (३९)॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्॥ गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तर दिग्भिश्चनवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने तस्या एषापरा भवति॥ ६ (४०)॥

"गौरीर्मिमाय"—इति (ऋ० स० २, ३, २२, १, अथ० स० ९, २६, २१)। अस्यवामीये दीर्घतमस आर्षम्। 'गौरी' सर्व-मिदं निर्मिमीते। कथम्? 'सलिलानि तक्षती' "कुर्वती" उदकपूर्वकत्वात् सर्वनिर्माणस्य। कथमुदकानि कुर्वती? 'एकपदी' 'बभूवुषी' एकपदी भवति, "मध्यमेन" सहैकत्वमा-पन्ना,—'द्विपदी' "मध्यमेन चादित्येन च"—'चतुष्पदी' "दिग्भि:" अनपेक्ष्येन्द्रादित्यौ,—'अष्टापदी "दिग्भिश्चावान्तर-दिग्भिश्च"—'नवपदी' "दिग्भिश्चावान्तरदिग्भिश्च" सह आदि-त्येन च"। 'सहस्राक्षरा' "बहूदका"। 'परमे' "व्योमन्" "व्यवने" विभक्ताना भूताना यत्परममवनमेकम्, सर्वभावानाम-विभक्त एक आत्मा, यस्तदात्मनैव भूतानां सलिलनिर्माणद्वारेण सर्व मिदं निर्मिमीते॥

"तस्या: एषा अपरा भवति"—। सा पुनः किमर्थम्? इति—गौरीति गुणाभिधानमप्रसिद्धाभिधेयं छन्दसि देवतायाम्, यतः परया समर्थयति॥ ६ (४०)॥

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदि-शश्चतस्रः। ततः क्षरत्यक्षरं तद्विश्वमुप जीवति॥ तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्र-याणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युप-जीवन्ति गौर्व्याख्याता तस्या एषा भवति॥ ७ (४१)॥

"तस्याः समुद्रा अधि वि क्षरन्ति" – इति (ऋ० सं० २, ३, २२, २)। अलिङ्गो मन्त्र इति चेत्? तस्या इत्येतदेव लिङ्गमन्वादिश्यते सम्बन्धादृचोः, तस्मान्नालिङ्गः। 'तस्या' गौर्या 'अधि' सकाशात् 'समुद्राः' मेघाः 'अधि विक्षरन्ति' "वर्षन्ति"। 'तेन' उदकेन 'जीवन्ति' प्रदिशश्चतस्र' दिक्प्रतिदिङ्निवासीनि "भूतानि" तेन जीवन्ती। 'ततः क्षरत्यक्षरम् पुनः पुन प्रतिसंवत्सरम्, तत एव क्षरत्युदकं मेघद्वारेण तत्' 'विश्व' भूतजात 'उपजीवति'॥।

एवं सैव सर्वोदकेशाना गौरीत्यभिप्राय. ॥

"उदकम्" "अक्षरम्"—इत्युच्यते। तत्कस्मात्? तद्धि सर्वमिदमभिव्यश्नुवत् "क्षरति"। सर्वमिदं सचराचरं सञ्चरति "गौ." "व्याख्याता"।

"तस्या. एषा भवति"—॥ ७ (४१)॥

गौरमीमेदनु वत्सं मिषन्तं मूर्द्धानं हिङङ्ङकृणोन्मातवा उ। सृक्काणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः॥ गौरन्वमीमेद्वत्सं निमिषन्त मनिमिषन्त मादित्यमिति वा मूर्द्धानमस्याभिहिङ्ङकरोन्मननाय सृक्काणंसरणं घर्मं हरणमभिवावशानामिमाति मायुं प्रप्यायते पयोभिर्मायुमिवादित्यमिति वा वागेषा माध्यमिका घर्मधुगिति याज्ञिका धेनुर्द्धयतेर्वाधिनोतेर्वा तस्या एषा भवति ॥ ८ (४२)॥

"गौरमीमेत्"—इति (ऋ० सं० २, ३, २६, ३, अथ० सं० ६, २७, ६)। दीर्घतमस आर्षम्। महाव्रते विनियोगः। 'गौः' "माध्यमिका वाक्" 'वत्सम्' पुत्रम् 'अन्वमीमेत्' अनुशब्दयति, महद्भिः स्तनयित्नुशब्दैः "आदित्यम्" स हि तस्या रसहरणाद् वत्सः। 'मिषन्तम्' "अनिमिषन्तम्" अव्यवहितदर्शनं सर्वदा। अपि च 'मूर्द्धानम्' शिरो रश्मीन् "अस्य" मध्यस्थानप्राप्तं प्राप्य। 'हिङ्ङ्कः कृणोत्' हिङ्कारेणोपशब्दयति। 'मातवै' सर्वलोकज्ञा-नाय। उदकानां 'सृक्वाण' "सरणम्" अनवस्थायिनमादित्यम्। 'घर्मं' "हरणं" रसानाम्। 'अभिवावशाना' पुनःपुनः वाश्यमाना, वाशन्ती प्रतिसंवत्सरमेव 'मिमाति मायु' शब्दं करोति। 'पयते' "प्रप्यायते" च प्रकर्षेण वर्द्धते "पयोभि" उदकै॥

घर्मधुक्पक्षे—गौरेव 'गौः' 'अन्वमीमेत्' अनुशब्दयति, वत्स-मेव 'वत्स' 'मिषन्तम्' तमेवोन्मुखं पश्यन्तम्। अपि च प्राप्य 'मूर्द्धानम्' अस्य उपघ्राय हिङ्ङित्येव शब्दं करोति। स हि गोः स्वभाव। 'मातवै' कथं नामायं मा जानीयात् मातामभेय-मिति। 'सृक्वाणम्' तामेव प्रत्यभिमुखं "सरणं" 'घर्मं' "हरणं" पयसाम्। 'अभिवावशाना' पुनः पुनर्वाश्यमाना, प्रत्यहमेव शब्दं करोति, 'प्रप्यायते' च 'पयोभिः' वत्समस्मांश्च या वर्द्धयति, सा नित्यमेवमस्त्विति॥

"धेनु" "धयते वा"। धयतेऽसौ वत्सेनेति, "धिनोतेः वा" तर्पयत्यसौ उदकेन पयसा वा॥

"तस्याः एषा भवति"—॥ ८ (४२)॥

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम्। श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्रवोचम्॥ उपह्वये सुदोहनां धेनुमेतां कल्याणहस्तो गोधुगपि च दोग्ध्येनां श्रेष्ठं सवं सविता सुनोतु न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मदभीद्धो घर्मस्तं सुप्रब्रवीमि वागेषा माध्यमिका घर्मधुगिति याज्ञिका अघ्न्याहन्तव्या भवत्यघघ्नीति वा तस्या एषा भवति ॥ ६ (४३) ॥

"उप ह्वये सुदुघाम्" - इति (ऋ० सं० २, ३, १६, १)। पूर्वयच समानार्षं विनियोगश्च। 'उप' गम्य मनसा 'ह्वये'-आह्वयेऽहंस्तुतिभिः। 'सुदुघां' कल्याणमुदकं या दुग्धे, ताम्, 'धेनुं' तर्पयित्रीं सर्वलोकस्य, 'एताम्' माध्यमिकां वाचम्। 'उत' "अपि च" मयैतामुपहूतां 'सुहस्तः' "कल्याणहस्तः" 'गोधुक्' इन्द्रः दोग्धुं प्रक्षारयतूदकानि। अमुना प्रकारेण 'श्रेष्ठम्' अतिशयेन प्रशस्यमेतम्, 'सवम्' उदकं 'सविता' योऽयम् 'अभीद्धः' 'घर्मः' मध्यस्थाना विद्युदाख्यः, स 'साविषत्' स "सुनोतु" नित्यं ददात्विति तं सुष्ठु प्रब्रूमः॥

घर्मधुक्पक्षे—धेनुरेवधेनुः, तामुपह्वये। 'सुदुघां' सुदोहां 'धेनुमेताम्' अस्मिन् कर्मणि अङ्गभावमुपगताम्। होता ब्रवीति।—मया चैवमुपहूतां 'सुहस्तः' 'गोधुक्' अध्वर्युः अपि च दोग्ध्वेना

'श्रेष्ठम्' अतिशयेन प्रशस्यम्, एतं 'सवम्' एतत् "यजुष्मत्पयः" 'साविषत्' "सुनोतु" अभ्यनुजानातु 'सविता'। यद्धि सवित्रा प्रसूतं क्रियते, तदेव साधु भवति। 'अभीद्धः' एष "धर्मः" रुचितो महावीरः। तमधिकृत्य प्रब्रूमः—"आहरेतस्मिन् पय आसेचनाय" इति॥

"अघ्न्या" कस्मात्? सा हि सर्वस्यैव "अहन्तव्या भवति" "अघघ्नोति वा" सा हि पाप हन्ति॥

यदि वाग् यदि गौः, "तस्याः एषा भवति"—॥ ६ (४३)॥

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती॥ सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती तस्या एषापरा भवति॥ १० (४४)॥

"सूयवसात्"—इति। (ऋ० सं० २, ३, २१, ५)। पूर्ववदार्षम्। माध्यमिका वागुच्यते। शोभन यवसमुदकमध्यात्मीकृत्यसूर्य्यात् तेन 'भगवती' धनवती, उदकेन उदकवती भव। "अथ" पुनः "इदानीम्" एव त्वयि भगवत्यां वयमपि त्वदुत्सृष्टेनोदकेन 'भगवन्तः' धनवन्तः 'स्याम'। सा च पुनरेवं प्रति संवत्सरम् 'अद्धि तृण' मेघम्, तृद्यतेऽसाविति तृणः, तम्, अद्धि सञ्चूर्णय। 'विश्वदानी' "सर्वदा" यथाकालम् 'पिब'

"च" सूर्य्यरश्म्युपहृतम् 'उदकम्' 'आचरन्ती' आसेवन्ती, 'शुद्धम्' अकलुषं सर्वतो मध्यस्थाने चरन्ती ॥

घर्मधुक्पक्षे—यवसमेव यवसम्, तज्जग्ध्वा पयस्विनी भव। वयमपि च ततः त्वत्प्रसूतेन पयसा धनवन्तः स्याम। या त्वमस्माकमेवमुपकारिणी, सा त्वं नित्यमद्धि तृणमघ्न्ये! 'विश्वदानीं' नित्यकालम्, पिब 'च शुद्धमकलुषमुदकमाचरन्ती आसेवन्ती आ सर्वतो यथाकाममरण्ये चरन्ती ॥

"तस्याः एषा अपरा भवति"—सा पुनः किमर्थम्? रूपतो हि पूर्वस्मिन्मन्त्रे घर्मधुक् सुतरामुपपद्यते, यत परया वसुभिर्देवैः सम्बन्धात् माध्यमिकैव देवतेत्युपपादयति ॥ १० (४४) ॥

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात्। दुहामश्विभ्यां पयो अघ्न्येयं सा वर्द्धतां महते सौभगाय ॥ इति सा निगदव्याख्याता पथ्या स्वस्तिः पन्था अन्तरिक्षं तन्निवासात्तस्या एषा भवति ॥ ११ (४५)॥

"हिंकृण्वती"—इति। (ऋ० सं० २, ३, १६, २)। पूर्ववदार्षादि। 'हिङ्,—इत्येवं प्रकारं शब्दं स्तनयित्नुं, कुर्वती 'वसुपत्नी' वसूनामुदकानामीश्वरा। 'वसूनां' वा आदित्यरश्मीनां मरुतां वा। 'वत्स' वत्स आदित्यो मध्यस्थानो वा रसहरणात् वत्सः तम्, 'इच्छन्ती' 'मनसा' या माध्यमिका वाक् नित्यम् 'अभ्यागात्'। 'सेयम्' 'अश्विभ्याम्' द्यावापृथिवीभ्यां सूर्य्याचन्द्राभ्यां

धा वर्षाय 'दुहां' दुग्धां प्रक्षरताम् 'पय.' उदकम्। अमुना प्रकारेण प्रतिसंवत्सरं 'वर्द्धताम्' उदकेनास्माक 'महते सौभगाय' यथा महत्सौभाग्यं धनवत्त्व स्यात् तथा वर्द्धतामिति॥

"पथ्या स्वस्ति:"—इति वक्तव्यम्। अत्र पूर्वपदं "पन्था अन्तरिक्षम्" "तन्निवासात्" पथ्या स्वस्ति. इत्युक्त निर्वचनम्। यथा प्रायणीयाया यजतिप्रयोगो दृष्ट., तथा समाम्नातः—"पथ्यां स्वस्ति पूर्वा यजति"—इति॥

"तस्या एषा भवति"—॥ ११ (४५)॥

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा॥

स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि सा नोऽमा गृहे सा निरमणे सा निर्गमने पातु स्वावेशा भवतु देवी गोपत्री देवान् गोपायत्विति देवा एनां गोपायन्त्विति वोपा व्याख्याता तस्या एषा भवति ॥१२ (४६)॥

"स्वस्तिरिद्धि."—इति (ऋ० सं० ८, २, ५, ६)। वसुकर्णस्यार्षम्। 'इत्'—इत्यवधारणार्थे। 'स्वस्ति.' "एव हि" 'प्रपथे' अन्तरिक्षे 'श्रेष्ठा' प्रशस्या सर्वदेवताभ्य.। 'रेक्णस्वती' "धनवती" उदकेन "अभि या वाममेति" या "वननीयानि" तदुदकानि नित्यम् "अभ्येति"। तस्या· किम्? इति—'सा नः' सा अस्मान्

'अमा' अमेति गृहनाम "गृहे" वसत 'अरणे' अरण्ये च 'निर्गमने' च वहिर्गृहात् 'पातु' रक्षतु। 'स्वावेशा' सूपचरणा 'भवतु' अस्माकम्। 'देवगोपा' "देवी" चासौ "गोपत्री" चेति देवगोपा, "देवान् गोपायत्त्विति, देवा एनां गोपायन्त्विति वा"। दातृन-स्मान् किं सर्वस्मात् हविषो गोपायतु, अथवा देवा माध्यमिका द्युस्थाना वा रश्मयः एनां गोपायन्त्विति वा॥

"उषा" "व्याख्याता"॥

"तस्या एषा भवति"—॥ १२ (४६)॥

अपोषा अनसः सरत्सम्पिष्टादह बिभ्युषी। नि यत्सीं शिश्नथद्वृषा॥ अपासरदुषा अनसः सम्पिष्टान्मेघाद् बिभ्युष्यनो वायुरनितेरपि वोपमार्थे स्यादनस इव शकटादिवानः शकटमानद्धमस्मिंश्चीवरमनितेर्वा स्याज्जीवनकर्मण उपजीवन्त्येनन्मेघोऽप्यन एतस्मादेव यन्निरशिश्नथद्वृषा वर्षिता मध्यमस्तस्या एषापरा भवति॥ १३ (४७)॥

"अपोषा अनसः सरत्"—इति (ऋ० स० ३, ६, २० ५)। वामदेवस्यार्षम्, परा च। 'अपासरत्' 'उषा' अपासर्पत्। कुतः? 'अनसः' वायोः, यदा सम्पिनष्टि वायुर्मेघान् तदा तन्निवासिन्युषाः मामप्ययं हनिष्यतीति बिभ्यत्यपसरति? 'नियत्सीं' 'शिश्नथत्' यदा "निरशिश्नथत्" निर्जघान निर्हन्ति 'वृषा' वर्षिता वायुः, तदा अपासरदुषाः॥

"अनो वायुः" "अनिते." धातो' प्राणनार्थस्य। "अपि चोपमार्थे स्यात्"—'अनस इव" "शकटात्" यथा शाकटिकः शकटात् केनचित् सम्पिष्यमाणादपसर्पेत्, एवं वायुना सम्पिष्यमाणान्मेघादपासरदुषाः। इति द्वितीया कल्पना॥

"तस्याः एषा अपरा भवति"—। सा पुनः किमर्थम्? उत्तमापि ह्युषाः आदित्यसंश्रयाद्भवति, इय तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्वभावप्रायोवृत्त्युपप्रदर्शनार्थम् ॥ १३ (४७)॥

एतदस्या अनः शये सुसम्पिष्टं विपाश्या। ससार सीं परावतः। एतदस्या अन आशेते सुसम्पिष्टमितरदिव विपाशि विमुक्तपाशि ससारोषाः परावतः प्रेरितवतः परागताद्वेला व्याख्याता तस्या एषा भवति॥ १४ (४८)॥

"एतदस्या अनः शये"—इति (ऋ० सं० २, ६, ३१, १)। विशीर्णमुदकभावेन पृथिवीं सङ्क्लेद्यावस्थितं दर्शयन् ब्रवीति मेघम्।—'एतत्' 'अस्याः' उषसः 'अनः' मेघाख्यमाश्रयभूतं 'सुसम्पिष्टं' सुष्ठु सञ्चूर्णितं वायुना "इतरदिव" शकटान। 'विपाशि' छिन्नसर्वपाशबन्धनम्। 'आ शये' "आशेते" आतत्य पृथिवीं शेते आस्ते। यतः सम्पिष्यमाणात् 'ससार' माध्यमिका "उषाः" 'परावत' दूराद्दूरतरं ननाशेति॥

"इला" "व्याख्याता" "ईट्टे. स्तुतिकर्मणः" इति॥

"तस्या एषा भवति"—॥ १४ (४८)॥

अभि न इला यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु। उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः। सिषक्तु न ऊर्जव्यस्य पुष्टेः॥ अभिगृणातु न इला यूथस्य माता सर्वस्य माता स्मदभि नदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य मनुष्यस्य मनुष्यस्य ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टे रोदसी रुद्रस्य पत्नी तस्या एषा भवति॥ १५ (४६)॥

"अभि न इला"—इति ( ऋ० सं ४, ७, १६, ६ ७, अथवा ५, ३, ६, ११ २० )। अत्रेरार्षम्। शक्वरी। 'अभिगृणातु' अभिशब्दयत्वस्मान्। कासौ? 'इला'। किंलक्षणा? 'यूथस्य माता' मेघयूथस्य निर्मात्री मध्यमा। केनाभिगृणातु? 'नदीभिः' नदनाभिरद्भिः। 'उर्वशी वा' उर्वशीति वा योच्यते, इडेति वा, सा 'गृणातु' 'नः' अस्मानिति अभिस्तनयतु। "उर्वशी वा बृहद्दिवा गृणाना"। उपमार्थे वाशब्दः भेदापेक्षया, उर्वशीव 'बृहत्' महत् गृणातु, 'दिवा' द्योतनवता विद्युत्सहितेनोदकसमूहेन, 'गृणाना' शब्दयन्ती। 'अभ्यूर्ण्वाना' सर्वमिदमभिप्रच्छादयन्ती, 'प्रभृथस्य' "प्रभृतस्य" प्रकर्षेण सम्भृतस्य, 'आयोः' "अयनस्य" गमनशीलस्य "उदकस्य" समूहेन 'सिषक्तु' "सेवताम्" 'नः' अस्मान् 'ऊर्जव्यस्य पुष्टेः' यवादेः "अन्नस्य" पोषणाय॥

"रोदसी" "रुद्रस्य पत्नी" रुद्रस्य विभूतिः ॥

"तस्याः एषा भवति"—॥ १५ (४९) ॥

रथन्नु मारुतं वयं श्रवस्युमा हुवामहे। आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी॥ रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामह आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥ १६ (५०) ॥

इत्येकादशाध्यायस्य चतुर्थः पादः ॥ ११, ४ ॥

"रथं नु मारुतम्"—इति (ऋ० स० ४, ३, २०, ३)। श्यावाश्वस्यार्षम्। आग्निमारुते विनियोग.। स्तोता ब्रवीति।—'नु' "क्षिप्रम्" 'वयं' 'रथम्' 'आहुवामहे' "आह्वयामहे"। मारुत' मरुत्संयुक्तम्, 'श्रवस्युम्' "श्रवणीयं" यशस्विनम्। यस्मिन् किम्? इति—"आ यस्मिन् तस्थौ" यस्मिन्नातिष्ठति, रंहणे गमने 'रोदसी' 'सचा' सह 'मरुत्सु' "मरुद्भि." सहिता मरुद्भिः रोदसी। किम्? इति—'सुरणानि' "सुष्ठु रमणीयानि" "उदकानि" 'बिभ्रती' धारयन्त्यातिष्ठति—इति। त वयं मेघं रथमाह्वयामहे वर्षार्थमिति ॥१६ (५०)॥

इति ऋज्वर्थायां निरुक्तवृत्तौ षोडशस्य (एकादशस्य) अध्यायस्य चतुर्थः पादः ॥ ११।४॥

इति श्रीजम्बूमार्गनिवासिनो भगवद्दुर्गाचार्य्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ षोडशोऽध्यायः (एकादशोऽध्यायः) समाप्तः ॥ ११ ॥

(१) (२) (३) (४) (५) (६) (७)
श्येनआदायस्वादिष्ठयासोमंयत्त्वानवोनवोपरंमृत्योत्वेप-
(८) (९) (१०) (११) (१२)
मित्थाप्रवोमहेउदुज्योतिर्धातासोमस्याथातोमध्यस्थानादेवग-
(१३) (१४) (१५) (१६) (१७) (१८)
णाआविद्युन्मद्भिरारुद्रासविष्टवीशमीचिरूपासउदीरताम-
(१९) (२०) (२१) (२२) (२३)
ङ्गिरसःसूर्यस्येवस्तुषेय्यमथातोमध्यस्थानाःस्त्रियोदक्षस्यवाय-
(२४) (२५) (२६) (२७) (२८) (२९)
स्मैत्वंकिमिच्छन्तीपावकानोमहोअर्णोयद्वाग्वदन्तीदेवींवाचम-
(३०) (३१) (३२) (३३) (३४) (३५) (३६)
न्विदनुमतेराकामहंसिनीवालिकुहूमहमन्यमूपूर्वशीविद्युन्नव-
(३७) (३८) (३९) (४०) (४१) (४२) (४३)
लित्थेन्द्राणींनाहमिन्द्राणिगौरीर्मिमायतस्यागौरमीमेदुपह्वये-
(४४) (४५) (४६) (४७) (४८) (४९)
सूयवसाद्भिङ्कृण्वतीस्वस्तिरिद्ध्यपोषाएतदस्याअभिनोरथ -
(५०)
न्नुमारुतमिति पञ्चाशत् ॥

इति निरुक्ते (उत्तरषट्के) एकादशोऽध्यायः

समाप्तः ॥ ११ ॥

## अथ द्वादशाध्यायस्य

### प्रथमः पादः ।



व्याख्याता मध्यस्थाना देवता, सवचनलिङ्गविशेषाः, अधुना एतेनैव समाम्नायानुक्रमेण द्यु स्थाना व्याख्येयाः, तदर्थं विशेषतः पुनरधिकारवचनम् ॥

ॐ ॥ अथातो द्यु स्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतोऽश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकास्तयोः काल ऊर्ध्वमर्द्धरात्रात् प्रकाशीभावस्यानुविष्टम्भनुतमो भागो हि मध्यमो ज्योतिर्भाग आदित्य स्तयोरेषा भवति ॥ १ ॥

"अथातो द्युस्थाना देवताः"—इति । बहुवचनं पक्षेऽर्थवत् । द्यौस्तेषां स्थानमिति द्युस्थाना., देवता व्याख्यास्यन्त इति शेषः ॥

"तासामश्विनौ प्रथमागामिनौ भवतः" । तौ कस्मात् ? कालतो हि द्युस्थानाना देवताना विशेषो विवक्षितः, आश्विने च स्तुतशस्त्रके कर्मणि प्रथममश्विनोः काल. सन्धौ । एकाश्वाश्वी

मध्यस्थानः एको द्युस्थानो नैरुक्तानाम्, अतो द्युस्थानमध्यस्थान-त्वात्तयोरश्विनोरुपन्यासः। यद्येवमेकस्य मध्यस्थाने एकस्य द्युस्थाने उपदेशः प्राप्नोति? न, एकैकस्य तयोः अश्विशब्दस्य पृथग्भावेन स्तुत्यभावादश्विद्वन्द्वस्य चात्यन्तमवियोगात्, नासत्याविति च पृथक् स्तुत्यभावात्। सत्यप्यवियोगे प्राथम्यात् प्रथमस्य समाम्नानं युक्तम्? इति चेत्, न, तत्कालेन मध्यस्थानस्य हीयमानरूपत्वात्, द्युस्थानस्य च वर्द्धमानरूपत्वात्, अतोऽनन्तरञ्च द्युस्थानदेवतारूपान्तरसंस्थानादिति॥

"अश्विनौ कस्मात्? "यद् व्यश्नुवाते सर्वम्"। केन? "रसेनान्यः" रसेनोदकेन सर्वं व्यश्नुते व्याप्नोति। "ज्योतिषान्यः" ज्योतिषैकः। "अश्वैः अश्विनौ इत्यौर्णवाभः"। अश्वैस्तद्वन्तौ ताविल्यौर्णवाभ आचार्यो मन्यते।

"तत् कौ अश्विनौ"? इति विचारः। तदिति वाक्योपादाने। कावेतावश्विनाविति विचारार्थः प्रश्नः। "द्यावापृथिव्यौ इत्येके"। विज्ञायते हि—"तौ यौ प्रत्यक्षदैवतमाश्विनाविमे एव ते द्यावापृथिव्यौ"—इति द्यौर्ज्योतिषा व्याप्नोति, पृथिव्यन्नेन।—। "अहोरात्रौ इत्येके"। अहर्ज्योतिषा व्यश्नुते, रात्रिरवश्यायैः।—"सूर्याचन्द्रमसौ इत्येके"। सूर्यो ज्योतिषा व्यश्नुते, रसेन चन्द्रमाः।—"राजानौ पुण्यकृतौ इत्यैतिहासिकाः" अश्वैरश्विनावित्येतन्निर्वचनं अथास्मिन् पक्षे इतिहासे समवैति॥

"तयोः कालः ऊर्द्ध्वमर्द्धरात्रात् प्रकाशीभावस्यानुविष्टम्भम्"। ज्योतिषा व्यतिभिद्यमानमूर्द्ध्वमर्द्धरात्रात् तमो यदा ज्योतिरनु-

विष्टभ्नाति, सोऽश्विनोः कालः। ततः प्रभृति सन्धिस्तोत्रं पुरोदयादाश्विनम्, उदिते सौर्य्याणि। तत्र यत्तमोऽनुप्रविष्टं ज्योतिषि, तद्भाग "मध्यमः" तन्मध्यमस्य रूपम्। यत् "ज्योति." तमसि अनुप्रविष्टं तद्भाग तद्रूपम् "आदित्यः"। तावेतौ मध्यमोत्तमाविति स्वमतमाचार्य्यस्य॥

यतः समर्थनायोदाहरति "तयोः एषा भवति"—॥ १॥

वसातिषु स्म चरथोऽसितौ पेत्वाविव। कदेदमश्विना युवमभि देवां अगच्छतम्॥ इति सा निगदव्याख्याता तयोः समान कालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषाऽर्द्धर्चो भवति। वासात्यो अन्य उच्यत उषःपुत्रस्तवान्य इति तयो रेपापरा भवति॥ २॥

"वसातिषु स्म"—इति। उपजातदेवतादर्शनचक्षु अतीतेषु रात्रिपर्य्यायेषु सन्धौ प्राप्ते सहसैवाश्विनौ दृष्ट्वा मन्त्रदृक् ब्रवीति।—'वसातिषु' रात्रिषु तासु हि प्राणिनो निवसन्ति। किं तासु? इति—'चरथः' युवाम्। कथम्? 'असिताविव-पेत्वौ' कृष्णाविव मेघौ समानरूपौ। उषसि कथमपि मया लक्षितौ यतो ब्रवीति,—"कदेदमश्विना युवम्"। कदेदमस्मत्-कर्म प्रति ये देवा आगताः, तान् प्रति हे युवामश्विनौ! 'आगच्छतम्' आगतवन्तौ स्थः॥

"तयो." अश्विनो "समानकालयोः" उभयोरपि हि तयोरू द्ध्र्वमर्द्धरात्रात् काल इति समानकालः "समानकर्मणो" उभयोरपि तयोरेक कर्म, तिरो अह्न्याः सोमा आश्विनश्च द्विकपालः। "सस्तुतप्राययोः" प्रायेण हि तयोः बाहुल्येन संस्तव एव॥

तयो पुन 'असस्तवेनैषोऽर्द्धर्चो भवति"॥

ननु अस्यामृचि वसातिषु स्म चरथ इति वसातयो हि जनपदा अपि प्रसिद्धाः, तदधिपती पुण्यकृतौ राजानौ अश्वैस्तद्धन्ताविति शक्यते कल्पयितुम्? तद्यथा—वासात्यौ तद्देशाधिपती कौचिद्राजानौ बह्वश्वौ पुण्यकृतौ यज्ञकर्मणि देवान् प्रति गतौ केनचिदुच्येते।—यौ युवां वसाति षुजनपदेषु नित्यमसिताविव पेत्वौ समानवेषौ चरथ', तौ युवामिदं देवस्थानं प्रतिपेदे यावन्तेन्ते, तान् प्रति कदा हे अश्विनौ युवामागतवन्ताविति। मा भूदेषा मन्त्रार्थयोजनेत्यर्थयोजनेत्यत आह,—

"वासात्योऽन्य उच्यते, उषः पुत्रः तवान्यः इति"। एको वासात्य उच्यते, एकश्च उषसः पुत्र इति। एवमेतस्मिन् भिन्न स्तुतावर्द्धर्चे उषसः पुत्रेणसूर्येण सह समानव्याख्यानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति॥

"तयोः एषा अपरा भवति"। सा पुनः किमर्थम्? मध्यमोत्तमाव श्विनावित्यस्यैवार्थस्य दृढतायै स्फुटं यदेतस्यामेतत्परस्यामृचि॥२॥

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः। जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः

पुत्र ऊहे ॥ इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवो अन्यः सुभगः पुत्र ऊह्यत आदित्यस्तयो रेषापरा भवति ॥ ३ ॥

"इहे हजाता"—इति (ऋ० स० २, ४, २५, ४)। अगस्त्यस्यार्षम्। प्रातरनुवाकाश्विनयोः विनियोगः। हे अश्विनौ? युवामुच्येथे।—'इहेह जाता' "इह च" मध्यस्थाने "इह च" द्युस्थाने "जातौ" 'समवावशीता' "संस्तूयेथे"। केन? 'अरेपसा तन्वा' "अपापया तन्वा"। यथासङ्कल्पतया। 'नामभिः स्वैः' परमनाश्रित्य यानि स्वस्तुतिनिमित्तानि तैः। किञ्च 'जिष्णुर्वामन्यः' नित्यमेव जेता युवयोरन्यः। 'सुमखस्य सूरि.' "सुमहतो बलस्येरयिता" शत्रुषु, स च नान्यो मध्यस्थानात् इति "मध्यमः" मध्यस्थानः। "दिवो अन्यः" "सुभगः पुत्रः" सुभगः सुधनः, ऊहे "ऊह्यते" वायुना नित्यम्, स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति ॥

"तयो· एषा अपरा भवति"—। सा पुनः किमर्थम्? संस्तुतप्रायावेतौ समानकालौ समानकर्माणौ इत्युक्तं तदुपप्रदर्शनार्थम् ॥३॥

प्रातर्युजा विबो धयाश्विनावेह गच्छताम्। अस्य सोमस्य पीतये ॥ प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय तयो रेषापरा भवति ॥ ४ ॥

"प्रातर्युजा" इति (ऋ० स० १, २, ४, १)। मेधातिथे-रार्षम्। प्रातरनुवाके विनियोगः। हे स्तोतः! यावेतौ प्रातर्युज्येते हविषा स्तुत्या च। तावेतौ 'अश्विनौ' विस्पष्टाभिः स्तुतिभि अस्मदर्थं विबोधय। 'विबोधितौ च त्वया 'इह' कर्मणि 'आगच्छताम्' अस्माकम् 'अस्य सोमस्य' 'पीतये' "पानाय" ॥

"तयो एषा अपरा भवति"। सा पुनः किमर्थम्? नैवानयोः अन्यस्मिन् काले इज्यास्ति, यद्यपि क्रियते, अनिज्यैव सेति सुतरां परया संस्तवकालश्चोपप्रदर्शयति— ॥ ४ ॥

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम्। उतान्यो अस्मद्यजते विचावः पूर्वः पूर्वो यजमानो वनीयान् ॥ प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतदप्यन्यो अस्मद्यजते विचावः पूर्वः पूर्वो यजमानो वनीयान्वनयितृतमस्तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्त उषावृष्टेः कान्तिकर्मण उच्छतेरितरा माध्यमिका तस्या एषा भवति ॥ ५ ॥

"प्रातर्यजध्वम्"—इति (ऋ० स० ४, ४, १८, २)। अत्रेरार्षम्। प्रातरनुवाके विनियोगः, आश्विने च। हे स्तोतारो यूयमुच्यध्वे।—तौ "अश्विनौ" 'प्रातः' एव 'यजध्वम्'। कथम्? इति, यतो ब्रवीमि,—'प्रहिणोत' प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च

गमयतेति। किमित्येव ब्रवीमि।—प्रातर्यजध्वमिति। इतः,—यस्मात् 'न सायमस्ति देवया.' अनयोर्देवयोः न सायमस्ति "इज्या"। यद्यपि कथञ्चित् स्यात्, 'अजुष्टम्' अनासेवित तदश्विभ्यां कर्म। "उतान्यो अस्मद्यजते"। "अपि" च अनादृते त्वयि 'अन्य.' अस्मत्त एतावश्विनौ 'यजते' 'वि च अव' व्यावयति च, तर्पयति हविर्भिः। 'पूर्वः पूर्वः' यजमान' प्रथम प्रथमो यजमानो 'वनीयान्' "वनयितृतमः" सम्भक्तृतमः, आद्रृतत्वात्, तस्यैव हविरासेवेते अश्विनौ, नेतरस्येति॥

"तयो. काल. सूर्य्योदयपर्य्यन्त" प्रकाशीभावस्यानुविष्टम्भमित्यत कालात् प्रभृति सूर्य्योदयपर्य्यन्तस्तयो' काल, ततः पर यागकालः। तत. किम्? "तस्मिन् अन्याः देवता" तस्मिन् स्तुतिकाले अन्या देवता अश्विने शस्त्रे या स्तुति लभन्ते, ता' "ओप्यन्ते" तासामावाप' तत्कालस्तुतिप्रतिलम्भे इति। तत्र तावदुषा प्रथममोप्यते, तद्देवतानि सूक्तानि शस्यन्ते॥

"उषा" "वष्टेः कान्तिकर्मण."। "वश कान्तौ (अ० प० ७०)"—इत्यस्य। यच्चोक्तम् "उच्छतीति सत्या"—इति, तद्वा इद विकल्पेन द्युस्थानाया', या पुनः "इतरा माध्यमिका" उषा., न तस्या विकल्पः, किं तर्हि? उच्छतेरेव सा विवासनार्थस्य,—उदकानि विवासयति, विवास्यते वा मेघान्मध्यमेनेति॥

"तस्याः एषा भवति"—॥ ५॥

उपस्तच्चित्रमाभरास्मभ्यं वाजिनीवति। ये नतोकञ्च तनयञ्च धामहे॥ उषस्तच् चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि तस्या एषापरा भवति॥ ६॥

"उषस्तच्चित्र मा भरा"—इति (ऋ० सं० १, ६, २६, ३। य० वा० सं० ३४, ३३। सा० सं० उ० आ० ८, ३, ८, १)। गोतमस्यार्षम्। प्रातरनुवाके आश्विने च विनियोगः। हे 'उषः!' 'वाजिनीवति!' तदस्माकं 'चित्र' 'चायनीयं धनम्' 'आभर' "आहर" त्वम्। 'येन' त्वत्प्रत्तेन वयं "पुत्रांश्च पौत्रांश्च" अविच्छेदेन तृप्तान् 'धामहे' "दधीमहि"॥

"तस्याः एषा अपरा भवति"। सा पुनः किमर्थम्? पूर्वस्यामृचि चित्रं धनमाहरेत्युक्तम्, तच्च पुनरुभयोरप्युषसोरविशिष्टम्, विशिष्टन्तु परस्यामुत्तमलिङ्गम्—"पूर्वे अर्द्धे रजसो भानु मञ्जते" —इति, अतः परा उदाह्रियते—॥ ६॥

एता उत्या उषसः केतुमक्रत पूर्वे अर्द्धे रजसो भानुमञ्जते॥ निष्कृण्वाना आयुधानीव धृष्णवः प्रतिगावोऽरुषीर्यन्तिमातरः॥ एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् पूर्वे अर्द्धे अन्तरिक्षलोकस्य समञ्जते भानुना निष्कृण्वाना आयुधानीव धृष्णवः। निरि—

स्येष समित्येतस्य स्थाने। एमीदेषां निष्कृतं जारिणी-वेत्यपि निगमो भवति। प्रतियन्ति गावो गमनादरुषी-रारोचनान्मातरो भासो निर्मात्र्यः सूर्या सूर्यस्य पत्न्ये-षैवाभिसृष्टकालतमा तस्या एषा भवति ॥ ७ ॥

"एताउत्या"—इति (ऋ० सं० १, ६, २४, १। सा० सं० उ० आ० ८, ३, १६, १)। या. 'पूर्वे अर्द्धे' 'रजस.' "अन्त-रिक्षलोकस्य" 'समञ्जते' "भानुना" भासा आत्मानमभि व्यञ्जयति। 'एता' 'त्याः' "ताः" 'उषस.'। किमिति। 'केतुम् अक्रत' "अकुर्वत" कुर्वन्ति लोकस्य "प्रज्ञानम्"। कथन्ता प्रज्ञानं लोकस्य कुर्वन्ति? अत आह,—"निष्कृण्वाना आयुधानीव धृष्णव"। "निरित्येष समित्येतस्य स्थाने"। यथा—सस्कुर्वाणा नित्यन्निर्मृजन्त' आयुधानि निर्मलानि कृण्वन्ति धृष्णव धर्षयितार. ते आयुधिनस्तज्जीवना, एव भानुना स्वेन भासा तमोमलमपनीय निर्मलानि प्रज्ञानानि लोक-स्योपस संस्कुर्वन्ति। ततश्च "प्रति गावोऽरुषीर्यन्ति मातर."। यत एवोदितास्तमेव सूर्य्यम्प्रति यन्ति तत्रैवान्तर्लीयन्ते, सूर्य्यस्यैव हि रश्मिप्रान्तप्रोत्सार्य्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते, ता उषस इत्याचक्षते, स एष परमार्थत' सूर्य्य एव स्त्रीलिङ्गवि-शिष्टो भवति, सूर्य्यकार्य्यत्वात् प्रकाशस्य ॥

"एकस्या एव पूजनार्थं वहुवचनम्"—इति वचनभेदप्रति-समाधानम् ॥

निरित्येष समित्ये तस्य स्थाने सामर्थ्याद्व्यत्ययः, संस्क्रियमाणानि ह्यायुधानि अतिनिर्मलानि भवन्ति ॥

यथा चोपद्यते उपसर्गव्यत्ययः, तथा निगममुदाजहार।—"एमीदेषाम्"—इति। "यदा दीध्येन दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः। न्युप्ताश्च बभ्रवो वाचमक्रत एमीदेषां निष्कृतं जारिणीव॥"—इति (ऋ० सं० ७, ८, ३, ५)। कवषस्य वा अक्षस्य वा आर्षम्। कृतनिवृत्तिर्देवनादशक्नुवन्नात्मानं धारयितुं ब्रवीति। 'यदा दीध्ये' भृशमभिध्यायामि निश्चयेन 'न दविषाणि' न देविष्यामि 'एभिः' अक्षैरिति। अथ तदा 'सखिभ्यः' समानख्यानेभ्यः कितवेभ्य 'परायद्भ्यः' परागच्छद्भ्य देवनस्थानमहमेभ्यः 'अवहीये' भृशं हीनोऽस्मीति। यदा च पुनस्ते प्राप्य आस्फारं निवपन्ति अक्षान्, अथ पुनस्तदा तैर्न्युप्ताश्च ते 'बभ्रवः' बभ्रुवर्णा अक्षाः 'वाचमक्रत' शब्दमकुर्वत, अथ तदा निवृत्तिमविगणय्य 'एमि इत्' आगच्छाम्येव 'एषाम्' अप्येषां अप्येवं 'निष्कृतं' संस्कृतम् अक्षस्थानम् आस्फारं संस्कृतं 'जारिणीव' व्यभिचारिणीव काचिद्दुःस्त्रीचारित्रमात्मनोऽविगणय्येति ॥

"सूर्य्या"—इति वक्तव्यम्। सा पुनरियं "सूर्य्यस्य पत्नी" "एषैव" उषाः, "अभिसृ कालतमा" यथा सूर्य्यस्योदयकालं प्रत्यभिसृष्टतमा भवति, गततमा भवति, तथा तथा सैषा उषाः सूर्य्या सम्पद्यते। "तस्याः एषा भवति"—॥ ७ ॥

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुच-क्रम् ॥ आरोह सूर्य्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥ सुकाशनं शन्नमलं सर्वरूपमपि वोपमार्थे स्यात्सुकिंशुकमिव शल्मलिमिति किंशुकं क्रंशतेः प्रकाशय-तिकर्मणः शल्मलिः सुशरो भवति शरवान्वारोह सूर्य्ये अमृतस्य लोकमुदकस्य सुखं पत्ये वहतुं कुरुष्व सविता सूर्य्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणं वृषाकपायी वृषाकपेः पत्न्येषैवाभिसृष्टकालतमा तस्या एषा भवति ॥ ८ ॥

"सुकिंशुक शल्मलिम्"—इति (ऋ० सं० ८, ३, १३, ५)। सूर्य्याया आर्षम्। विवाहे विनियोग। त्रित्वे तावदुच्यते प्रभा-मात्मना विजम्भ्य तदधिदेवतां ब्रवीति।—'सुकिंशुक' सुष्ठुकाशनं दीपन लोकानाम्, 'शल्मलिं' "शन्नमल" व्यपगतमलम्, 'विश्व-रूपं' "सर्वरूपम्" 'हिरण्ववर्णं' हिरण्योपमवर्णं हिरण्यमिव वर-णीयम्, 'सुवृतं' सुवर्त्तनं शोभनैर्वा रश्मिभिर्वृतम्, 'सुचक्रं सुच-कनं सुदीप्तम्। एत मेवलक्षण मण्डलं रथम् 'आरोह' त्वं हे 'सूर्य्ये'! 'अमृतस्य' उदकस्य 'लोकं' स्थानम्। तत एवमधिरुह्य 'स्योनं' सुखमेतस्मै 'पत्ये' मण्डलाधिष्ठात्रे 'वहतु' 'कृणुष्व' कुरुष्व।

पृथक्त्वपक्षेतु—रथ एव रथः, सूर्य्य उद्वोढा, कन्या सूर्य्यो-च्यते। एवंलक्षण रथमारोहेति ॥

"अपि वोपमार्थे स्यात्—"सुकिंशुकमिव शल्मलिमिति"। किंशुकमिति पलाशपुष्पे प्रसिद्धिः इह तु रक्तपुष्पत्वसामान्यात् सुपुष्पितमिव शल्मलिमिति सामर्थ्यात् तेनोपमानयोग आदित्यस्य पुष्पतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्राय. ॥

"किंशुकं क्रंशतेः" धातोः प्रकाशनार्थस्य, तद्धि दीप्तिमद्भवति।—"शल्मलिः सुशरो भवति"। "शॄ हिंसायाम्"—इत्यस्य धातोः, स हि मृदुत्वात् सुहिंस्यो भवति। "शरवान् वा"। हिंसावान्, कण्टकैरसौ हिनस्ति हि। "सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम्"। निरुक्त पक्षे ज्योत्स्नां सोमाय ददाति। यदुक्तम्—"आदित्यतोऽस्य दीप्तिर्भवति" -इति। "प्रजापतये वेति" उषस वा मध्यस्थानाय प्रजापतये ददाति, केचित्त्वैतिहासिकपक्षे इच्छन्ति ॥

तेषामितिहासं शृणु। कथमेतत्? इति—"वृषाकपायी" "वृषाकपेः पत्नी" वृषाकपिरादित्यः, तस्य पत्नी, तद्विभूतिः, उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात्। सा पुनः "एषैव" सूर्या, "अभिसृष्टकालतमा" वृषाकपायीत्युच्यते ॥

"तस्याः एषा भवति"—॥ ८ ॥

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे। घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥

वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया

वाचा स्नुषा साधुसादिनीति वा साधुसानिनीति वा स्वपत्यं तत् सनोतीति वा। प्राश्नातु त इन्द्र उक्षण एतान्माध्यमिकान् संस्त्यायानुक्षण उक्षतेर्वृद्धिकर्मण उक्षन्त्युदकेनेति वा प्रियं कुरुष्व सुखाचयकरं हविः सुखकरं हविः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यं सरण्यूः सरणात्तस्या एषा भवति ॥ ६ ॥

"वृषाकपायि रेवति"—इति ( ऋ० स० ८, ४, ३, ३ )। इन्द्रस्यार्षम्। षष्ठे पृष्ठ्याहनि वृषाकपौ विनियोगः। हे 'वृषाकपायि!' 'रेवति' धनवति! रयिमति! 'सुपुत्रे!' मध्यमेनेन्द्रेण रसहरणसामान्यात्—सहस्थानसामान्यात्, 'सुस्नुषे' "माध्यमिकया वाचा" मिथुनसामान्यात्। किम्? इति—'घसत्त इन्द्र उक्षणः प्राश्नातु ते इन्द्रः तव स्वभूतानेतान्माध्यमिकानुक्षणोऽवश्यायसंस्त्यायान् एष इन्द्र आदित्यः, स हि तानुद्यन् पिबति। 'प्रियम्' इष्टम्, एतत् 'काचित्करं हविः'। कमिति सुखनाम, तस्य यदाचितमाचयन करोति, तद्भवति काचित्करम्। किं पुनस्तत्? 'हविः' उदकम्, तत् कुरुष्वावश्यायलक्षणं हविः अन्नमवश्यायैरभिनिष्पादय। किमर्थम्? 'विश्वस्मात्' सर्वस्मात् य एष इन्द्र आदित्यः 'उत्तरः' तदर्थमिति ॥

"स्नुषा" "साधुसादिनीति वा साधुसानिनीति वा"। शोभने अर्थे श्वसुरस्य सन्तानलक्षणे सीदत्यङ्गभावमुपैतोति

स्नुषा, साधु सनोति सन्तति सम्भजतीति वा स्नुषा, "सु अपत्यम्, तत्सनोतीति वा"। सु—इत्यपत्यनाम, प्रसूयते हि तदिति, तदियं श्वशुरस्य। सनोति सम्भजतीति वा स्नुषा। "उक्षणः" "उक्षतेः" वृद्ध्यर्थस्य। वर्द्धयन्ति हि ते ओषधीरवश्यायाः, त एव वा बहुत्वाद् वृद्धा भवन्ति। उक्षतेर्वा सेचनार्थस्य, "उदकेन" हि अवश्याया' सर्वमिदं सिञ्चन्ति॥

"सरण्यूः" इति वक्तव्यम्। सैव यदा सूर्या' प्रत्यविभागेन सृता प्रसृता भवति, तदा "सरणात्" सरण्यूरित्युच्यते॥

"तस्याः एषा भवति"—॥ ९॥

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदधुर्विवस्वते।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः॥

अप्यगूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदधुर्विवस्वतेऽप्यश्विनावभरद्यत्तदासीदजहाद् द्वौ मिथुनौ सरण्यूर्मध्यमं च माध्यमिकाञ्च वाचमिति नैरुक्ता यमञ्च यमीञ्चेत्यैतिहासिकास्तत्रेतिहासमाचक्षते त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव ततोऽश्विनौ जज्ञाते सवर्णायां मनुस्तदभिवादिन्येषर्ग् भवति॥१०॥

"अपागूहन्"—इति (ऋ० सं० ७, ६, २३, २)। देवश्रवस आर्षम्। 'अपागूहन्' 'अमृताम्' एतामुषसं वृषाकपाय्यवस्थायां 'मर्त्येभ्य.' मनुष्येभ्यः। के ते? रश्मय? "कृत्वी सवर्णामदः दुर्विवस्वते"। तत्सवर्णामेतां कृत्वा सरण्युम् अदद्दुर्विवस्वते आदित्याय। 'उत अश्विनौ अभरत्' स्तुतिभि· सोषा:, स ह्यश्विनो स्तुतिकालः अथवा सरण्यूरभरत् हविषा, स ह्यश्विनोर्यागकालः 'यत् तत् आसीत्' उषसो रूपं सरण्या वा 'अजहात्' अत्यजत्। 'द्वा' "द्वौ" 'मिथुन' "मिथुनौ" सरण्यू', "मध्यमञ्च माध्यमिकाञ्च वाचमिति नैरुक्ताः" यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन, तदोदिते आदित्ये विच्छिद्यते मध्यमस्य माध्यमिकायाश्च वाचः काल इति, एष तयोस्त्याग॥

"यमञ्च यमीञ्चेत्यैतिहासिकाः"। तन्मतेन मन्त्रार्थस्य योजना। त एव रश्मयः प्राणाधिदेवताभावमापन्नाः, तेष्वन्यस्तद्रूपं चेत्यैतिहासिको व्यवहार.। तान्त्वाष्ट्री सरण्यूमश्वाङ्कृत्वा, तथा सत्यश्विनोर्जन्म भविष्यत् पश्यन्तो लोकहिताय अमृतां अमरणधर्मिणीन्देवीम् अपागूहन्नन्तर्हिताञ्चक्रुः। मर्त्येभ्यो मनुष्येभ्यः उत्तरान् कुरून् प्रति निन्यु·। ततश्चान्या तत्सवर्णाञ्छायाप्रभवां कृत्वा तामदद्दुर्विवस्वते। उताश्विनावभरत् यत् आश्व तदा रूपमासीत्तेन सा सरण्यूरश्विनावभरत् अजनयत् वा अपुष्णात् उत्तरेषु कुरुषु। अजहादु द्वा मिथुना सरण्यूः द्वावन्यौ मिथुनौ यमञ्च यमीञ्चेति विवस्वतः सकाशादजहात् हित्वा ननाशेति॥

"तत्रेतिहासमाचक्षते"। ऋजुरितिहासार्थः। यथा त्वाष्ट्री सरण्यूः विवस्वतोढा, सा च तस्मात् ननाश। "तदभिवादिन्येषर्ग्भवति"—॥ १० ॥

त्वष्टा दुहित्रे वहतुं कृणोतीतीतदं विश्वं भुवनं समेति।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश॥

त्वष्टा दुहितुर्वहनं करोतीदं विश्वं भुवनं समेतीमानि च सर्वाणि भूतान्यभिसमागच्छन्ति यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश रात्रिरादित्यस्यादित्योदयेऽन्तर्द्धीयते॥ ११ ॥

इति निरुक्तौ द्वादशाध्यायस्य
प्रथमः पादः ॥ १२, १ ॥

त्वष्टा दुहित्रे इति (ऋ० सं ८, ६, १३, १)। पूर्वयैव समानार्षं विनियोगश्च। 'त्वष्टा' देवो विश्वकर्मा यं पुराणविदो वदन्ति, सः 'दुहित्रे' "दुहितुः" 'वहतुं' "वहनं" विवाहं "करोतीति" 'इदं विश्वं 'भुवनं' भूतजातं विवाहदर्शनप्रेप्सया 'समेति' स हि विवाहानां स्वभावः। 'यमस्य माता' भविष्यता योगेनोच्यते 'पर्युह्यमाना' पर्यूढा, यमञ्च यमीञ्च जनयित्वा, ततः 'महः' "महतः" 'जाया' 'विवस्वतः' देवस्य जाया भार्य्या हित्वा अपत्ये मिथुनावाश्वं रूपं कृत्वा 'ननाश' इति॥

नैरुक्तपक्षे तु 'त्वष्टा' मध्यमः, तमोभागस्य उषसः 'दुहित्रे' दुहितु दूरे हिताया. प्रकाशरूपाया. 'वहतुं' "वहन" विवस्वतः "करोति"। 'इदं विश्वं भुवनं समेति' प्रभातमिति मत्वा "सर्वाणि भूतानि" स्वासुस्वास्विति कर्त्तव्यतासु अभिसमागच्छन्ति। 'यमस्य माता पर्य्युह्यमाना' यमस्य मध्यमस्य माता देवधर्मेण अथवा द्युस्थानस्य यैव जाया सा मातेति। जायतेऽस्यां पुत्रत्वेन पतिः 'जाया' भार्य्या. "महतो विवस्वत." प्रकाशेन प्रोत्सार्य्यमाणा 'ननाश' नश्यति। सङ्क्षेपतो भाष्यकारोऽर्थं निराह।—"रात्रिरादित्यस्य" उषा जाया, सा "आदित्यस्योदयेऽन्तर्द्धीयते"—इति ॥ ११ ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ सप्तदशाध्यायस्य (द्वादशाध्यायस्य) प्रथम पादः ॥ १२ । १ ॥

---

## द्वितीयः पादः ॥

सविता व्याख्यातस्तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति तस्यैषा भवति ॥ १ (१२) ॥

"सविता"—इति वक्तव्यम्। स पुनरेष 'व्याख्यातः" अभिधानत, इह पुनरादित्यः। 'तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति" यदा यस्मिन् काले द्यौरेव अपहततमस्का भवति, न पृथिवी, पृथिव्यां तमो भवति, दिव्यपहते

तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति, स सावित्र' कालः तस्मिन् काले आदित्यः सवितोच्यते। "तस्य" सवितुः तत्कालोपलक्षितस्य "एषा" ऋक् प्राधान्यस्तुतिः "भवति"॥ १ (१२)॥

विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे। विनाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो विराजति॥ सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी कविः क्रान्तदर्शनो भवति कवतेर्वा प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च व्यचिख्यपन्नाकं सविता; वरणीयः प्रयाणमनूषसो विराजत्यधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात् सामान्यादित्यधस्तात्तद्वेलायां तमो भवत्येतस्मात् सामान्यादधस्ताद्रामोऽधस्तात् कृष्णः कस्मात् सामान्यादित्यग्निं चित्वा न रामामुपेयाद्रामा रमणायोपेयते न धर्माय कृष्णजातीयैतस्मात् सामान्यात् कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात् सामान्यादिति कालानुवादं परीत्य कृकवाकोः पूर्वं शब्दानुकरणं वचेरुत्तरं भगो व्याख्यातस्तस्य कालः प्रागुत्सर्पणात्तस्यैषा भवति॥ २ (१३)॥

"विश्वा रूपाणि प्रतिमुञ्चते कविः"—इति (ऋ० स० ५, ८१, २४, २। य० वा० स० १२, ३)। श्यावाश्वस्यार्षम्। आभि- प्लविके प्रथमेऽहनि विनियोगः, शिक्यपाशप्रतिमोके च यजमान- स्याग्नौ। 'विश्वानि' "सर्वाणि" 'रूपाणि' रूपवत्स्वर्थेषु 'प्रति- मुञ्चते' आबध्नाति। तमोऽपघ्नन् रूपाण्याविःकुर्वन्। 'कविः' "क्रान्तदर्शनः" अथवा "कवतेः" धातो गत्यर्थस्य कविः, कवति गच्छत्यसौ नित्यम्। किञ्च कवित्वादेव 'प्रासावीत्' "प्रसु- वति" जनयति। अभ्यनुजानाति च 'भद्रं द्विपदे चतुष्पदे' "द्विपाद्भ्यश्च" मनुष्यादिभ्यः "चतुष्पाद्भ्यश्च" गवादिभ्यः, यद्यत्तेषां भद्रं कल्याणं तत्तत्प्रसुवति। किञ्च। 'वि नाकम् अख्यत्' विख्यापयति नाक द्याञ्च विदर्शयति, तदा हि, तस्यां विकीर्णरश्मयो भवन्ति। किञ्च 'अनुप्रयाणम्, उषसः विरा- जति' उषस प्रयाणमनु विराजति प्रकाशते। सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा॥

"वि नाकमख्यत्"—इति सवितु कालोपलक्षणकं मन्त्र- लिङ्गम्, तत्पशुगुणसामान्येन समर्थयन्नाह। "अधोराम. सावित्र इति पशुसमाम्नाये विज्ञायते"। "कस्माद्गुणसामा- न्यात्"? इति—"अधस्तात्तद्वेलायान्तमो भवति" उपरिष्टाच्च ज्योतिः। शुक्लं तदा दिवि भवति, कीर्णरश्मित्वात्तस्याः, अधस्तात्तु भूम्यां तदा तमो भवति। एतस्मात् कालदेवतागुण सामान्यात् पशुरपि तथारूप एव भवति सावित्रः॥

आह,—"अधोरामः" इति किमुक्तं भवति? उच्यते,—"अधस्तात् कृष्णः"—इति यदुक्तं स्यात् तदुक्तं भवत्यधोराम इति॥

आह,—"कृष्णः कस्मात् सामान्यात्" राम इत्युच्यते? शृणु,—विज्ञायते हि "अग्निञ्चित्वा" प्रथमं चित्वा "न रामामुपेयात्"—इति। "रामा"—इति शूद्रोच्यते, सा हि "रमणाय" एव "उपेयते"—"न धर्माय" रमणार्थमेव सा। "कृष्णजातीया"—इत्येकार्थौ शब्दावधुना उत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत् पश्चावयं रामशब्दो वृतः कृष्णसामान्यमात्रेण॥

"कृकवाकु सावित्र इति पशुसमाम्नाये विज्ञायते" सः "कस्मात् सामान्यात्"? इति, उच्यते,—"कालानुवादं परीत्य" सवितुः कालमसौ वक्तीति एवं परीत्य परिज्ञाय समाम्नाये तस्य सावित्रत्वं कृकवाकुशब्दमधुना निर्वक्ति। कृकवाकोः पूर्वं शब्दानुकरणम्" कृकवाकुशब्दस्य पूर्वपदं शब्दानुकरणं कृकः—इत्येवमसौ शब्दङ्करोति, "वचेरुत्तरम्" वाकुरित्येतत्, कृकः—इत्येवं वक्तीति कृकवाकुः॥

"भग" वक्तव्यः। स पुनरेष "व्याख्यातः" स्त्रीभगेन शब्दव्युत्पत्तितः। "तस्य कालः प्रागुत्सर्पणात्" तस्मात्सावित्रात्कालात् परत एतदुत्तमं ज्योतिर्भगाख्यं भवति॥

"तस्य एषा भवति"—॥ २ (१३)॥

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षी-

त्याह ॥ प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्याध्रश्चिद्यं मन्यमान आढ्यालुर्दरिद्रस्तुरश्चित्तुर इति यमनाम तरतेर्वा त्वरतेर्वा त्वरया तूर्णगतिर्यमो राजा चिद्यं भगं भक्षीत्याहान्धो भग इत्याहुरनुत्सृप्तो न दृश्यते प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं भगो गच्छतीति वा विज्ञायते जनं गच्छत्यादित्य उदयेन सूर्य्यः सर्त्तेर्वा सुवतेर्वा स्वीर्य्यतेर्वा तस्यैषा भवति ॥३(१४)॥

"प्रातर्जितं भगम्"—इति (ऋ० सं० ५, ४, ८, २)। वसिष्ठस्यार्षम्। प्रातः प्रातस्तमासि यो जयति, स भवति प्रातर्जित्, तम् 'प्रातर्जितं' 'भगं' सूर्य्यम्, 'उग्रम्' उद्गूर्णम् अभ्युद्यतमुदयाय 'हुवेम' आह्वयामहे 'वयम्'। 'पुत्रमदितेः, यः "विभर्त्ता" "विधारयिता" "सर्वस्य" जगतः स्वेनानुग्रहेण। किञ्च 'आध्रश्चिद्यं मन्यमानः' "आढ्यालुः" आढ्यानां स्पृहयिता "दरिद्रः" स यं मन्यमानः आकाङ्क्षन्नहन्यहनि पूजयन्नास्ते, अपि नामोदियात् भगस्ततो वान्नार्थं पर्य्यटेयमिति ॥ 'तुरश्चित्' तुरोऽपि "यमः तूर्णगतिः" सर्वान् प्राणिन आभिमुख्येनोपसंहाराय तूर्णगतिस्त्वरितगतिः यं मन्यमान आस्ते प्रेताधिपातिः, तदुदयाद्धि कालातिक्रमेणासावुपसंहरति प्राणिनः। 'राजा चित्' राजापि चार्थिनां कार्य्यचिकीर्षया 'यं भगं भक्षि' तम् उदयं भजति इत्येव माह। तं वयं भगमाह्वयामहे ॥

आह,—"अन्धः भगः इत्याहुः" तस्य कोऽर्थः ? इति, उच्यते —स हि सूर्य्यभावम्, "अनुत्सृप्तो न दृश्यते" नास्मिन् द्रष्टॄणां ध्यानं दर्शनमस्तीत्यन्धः। न पुनरसावेव न पश्यति.—"प्राशित्रमस्याक्षिणी निर्जघानेति च"—इति। ऐतिहासिकपक्षाभिप्रायोऽयमर्थवादः प्राशित्रभागस्यानन्वीक्षणस्तुत्यर्थम्। "जनं भगो गच्छतीति"। तदेतत् प्रसिद्धमेव, यदा तदा तदात्मना जनमादित्यो गच्छति॥

"सूर्य्य."—इति वक्तव्यम्। स पुनरयं भगकालात्सृतः सूर्य्यो भवति। "सर्त्तेः वा" सूर्य्यः। "सुवतेर्वा" प्रसवार्थस्य, स एव हि इदं सर्वं प्रसुवति जनयतीत्यर्थः। "स्वीर्य्यतेर्वा" सुपूर्वस्य वा ईरयतेः गत्यर्थस्य, वायुना ह्ययं सुष्ठु ईर्य्यते प्रेर्य्यत इत्यर्थः॥

"तस्य एषा भवति" प्राधान्यस्तुतिः—॥३ (१४)॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यम्॥ उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्य्यमिति कमन्यमादित्यादेवमवक्ष्यत् तस्यैषापरा भवति॥ ४ (१५)॥

"उदुत्यं जातवेदसम्"—इति (ऋ० सं० १, ४, ७, १। य० वा० सं० ७, ४१। सा० सं० छ० आ० १, १, ३, १०)। प्रस्कण्वस्यार्षम्। आश्विने विनियोगः। यं 'उद्वहन्ति' उदयमुपन-

यन्ति 'जातवेदसम्' इति 'सूर्य्यं' 'केतवः' "रश्मयः" अश्वा वा यमुद्वहन्ति, "सर्वेषां भूतानां" 'दृशे' "दर्शनाय" सूर्य्यम्, तं वयमभिप्रेतार्थसिद्धयेऽभिष्टुमः ॥

"तस्य एषा अपरा भवति"—। सा पुनः किमर्थम्? जातवेदसं सूर्य्यमिति श्रवणात् सन्देहः,—किमियं जातवेदस्युत सौरीति? परा त्वसंशयमेव सौरीति परां निजगाद ॥ ४ (१७) ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च ॥ चायनीयं देवानामुदगमदनीकं ख्यानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावापृथिव्यौ चान्तरिक्षञ्च महत्वेन तेन सूर्य्य आत्मा जङ्गमस्य च स्थावरस्य चाथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति तस्यैषा भवति ॥ ५ (१८) ॥

"चित्र देवानाम्"—इति (ऋ० सं० १, ८, ७, १। य० वा० सं ७, ४२)। कुत्सस्यार्षम्। आश्विने विनियोगः। 'चित्रं "चायनीयं" पूजनीयम्। किं पुनस्तत्? 'देवानां' रश्मीनां यदेतत् 'उदगात्' 'अनीकं' समूहः। किमस्य? 'चक्षुर्मित्रस्य वरुणस्याग्नेः' एतस्मिन् मित्रस्य वरुणस्य अग्नेश्च चक्षुः "ख्यानम्" इत्यर्थः य एषः सूर्य्यः 'आत्मा' "जङ्गमस्य च स्थावरस्य च" सर्वभूतानुप्रवेशी 'आप्राः' "आपूपुरत्" आपूरयति "द्यावा-

पृथिव्यौ" च "अन्तरिक्षञ्च" महत्त्वेन सूर्य्या आत्मा। एतस्मिन् मित्रवरुणाग्न्यादीनां देवतानां व्यानमनेन सूर्य्यात्मना, य एतान् मित्रप्रभृतीन् पश्यति, स साधु पश्यतीत्यभिप्रायः। विज्ञायते हि रहस्य ब्राह्मणे—"य एष सूर्य्य आत्मा जगतस्तस्थुषश्चेति एतदिहैवोपेक्ष्यम्"—इति॥

भेदपक्षे तु मित्रप्रभृतीनां एतच्चक्षुरिति याज्ञिकपक्षे चक्षुषा ते पश्यन्तीति। तत्रापि विज्ञायते हि—"एष वै विश्वेषां देवानां चक्षुः"—इति॥

"अथ" "यत्" यदा "रश्मिपोषम्" आपूर्णस्तेजसा रश्मीन् सूर्य्यः "पुष्यति" बिभर्त्ति, "तत्" तदेव "पूषा भवति"॥

"तस्य एषा भवति"—॥ ५ (१६)॥

शुक्रन्ते अन्यद्यजतन्ते अन्यद्विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु॥ शुक्रन्ते अन्यल्लोहितन्ते अन्यद्यजतन्ते अन्यद्यज्ञियन्ते अन्यद्विषमरूपे ते अहनी कर्मद्यौरिव चासि सर्वाणि प्रज्ञानान्यवस्यन्नवन् भाजनवती ते पूषन्निह दत्तिरस्तु तस्यैषापरा भवति ॥ ६ (१७)॥

"शुक्रन्ते अन्यत्"—इति (ऋ० सं० ४, ८, २४, १। सा० सं० छ० आ० १, २, ३, ३)। भरद्वाजस्यार्षम्। चातुर्मास्येषु विनियोगः, पौष्णे हविषि। हे 'पूषन्!' 'शुक्रम्' 'अन्यत्' 'ते'

तव रूपं यल्लोहितम्, अन्यत्तव रूपं शुल्केन व्यपदेशात्सामर्थ्याल्लोहितादि। 'यजतं' "यज्ञिय" यज्ञार्हम्, अन्यत् अयज्ञियमयज्ञार्हमन्यत्। भगांशरूपेण हि नायमिज्यते, विज्ञायते हि—"तस्मादेतौ भगांशौ यज्ञेन यजन्ते"—इति। किञ्च 'विषुरूपे' भवतः, एते शुक्लकृष्णे रूपे 'अहनी' अहोरात्रे, कर्मणा—उदयेन शुक्लमहः करोषि, अस्तमयेन कृष्णम्। 'द्यौरिवासि' यथा द्यौरावृत्य सर्वं वर्त्तते, एवं त्वमपि। किञ्च 'विश्वाः हि मायाः' सर्वाः प्रज्ञाः प्रज्ञावतां त्वम् 'अवसि' पालयितृत्वात्पालयसि। उद्यन् अनु-अनुगृह्णासि हे "स्वधावः" "अन्नवन्"! पूषन्! यन्त्वामेवमादि-गुणयुक्तमद्राक्ष्म, तव तस्य 'भद्रा' भन्दनीया स्तुत्या 'रातिः' दानम् 'इह' अस्मिन् कर्मणि अस्मान् प्रति 'अस्तु'।—इत्येतदाशास्महे॥

"तस्य एषा अपरा भवति"—। सा पुनः किमर्थम्? इति,—पथिरक्षितृत्वे पूष्णोऽधिकारः, तत्परिप्रख्यापनार्थम्। अथवा "इयं वै पूषा"—इति विज्ञायते, तद्व्युदासार्थम्॥ ६ (१७)॥

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कम्। स नो रासच्छुरुधश्चन्द्राग्रा धियन्धियं सीषधाति प्रपूषा॥ पथस्पथोऽधिपतिं वचनेन कामेन कृतोऽभ्यानडर्कमभ्यापन्नोऽर्कमिति वा स नो ददातु चायनीयाग्राणि धनानि कर्म कर्म च नः प्रसाधयतु पूषेत्यथ यद्वि-

षितो भवति तद्विष्णुर्भवति विष्णुर्विशतेर्वा व्यश्नोतेर्वा तस्यैषा भवति ॥ ७ (१८) ॥

"पथस्पथः परिपतिम्"—इति (ऋ० सं० ७, १, ८, ८। य० वा० सं० ३४, ४२)। ऋजिश्वन आर्षम्। पौष्णे हविषि पञ्चमेऽहनि व्यूढे विनियोगः। 'पथस्पथ.' सर्वमार्गाणामित्यर्थः। किम्? इति—'परिपतिम्' "अधिपतिं" 'वचस्या' "वचनेन" स्तुत्या 'कामेन' स्वेन, पूषणं कामेनैव प्रत्यभिमुखीकृत्य 'अर्कम्' अहम् 'अभ्यानट्' स्तुत्या कामप्राप्त्यर्थमभिव्याप्नोति। सोऽभिव्याप्तः सन् नोऽस्मभ्यं 'रासत्' "ददातु"। किम्? 'शुरुधश्चन्द्राग्राः' शुचं संरुन्धन्ति यानि धनानि, "चायनीयाग्राणि" अभिपूजितागमानि धर्म्य आगमो येषाम्। किञ्च तैर्धनैर्धर्मलब्धैः 'धियं धियं सीषधाति' साधयति 'प्रपूषा' "कर्म कर्म" अस्माकं इष्टिपशुसोमादिलक्षणं प्रसाधयतु पूषा, यागायाविघ्नेनोपनामयतु इत्यर्थः ॥

"अथ" "यत्" यदा "विषितः" व्याप्तोऽयमेव सूर्यो रश्मिभिः "भवति" "तत्" "तदा" विष्णुर्भवति। "विशतेर्वा" यदा विष्टः प्रविष्टः, सर्वतो रश्मिभिर्भवति तदा विष्णुर्भवति। "व्यश्नोतेर्वा" विपूर्वस्य वाश्नोतेः, यदा रश्मिभिरतिशयेनायं व्याप्तो भवति, व्याप्नोति वा रश्मिभिरयं सर्वम्, तदा विष्णुरादित्यो भवति ॥

"तस्य एषा भवति"—॥ ७ (१८) ॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूळ्हमस्य पांसुरे॥ यदिदं किञ्च तद्विक्रमते विष्णु स्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूळ्हमस्य पाँसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात् समूळ्हमस्य पांसुल इव पदं न दृश्यत इति पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पिंशनीया भवन्तीति वा॥ ८ (१६)॥

इति निरुक्तौ द्वादशाध्यायस्य द्वितीयः पादः॥ १२, २॥

"इदं विष्णुः"—इति (ऋ० सं० १, २, ७, २। या० वा० सं० ५, १५, सा० सं० उ० आ० ८, २, ५, २। अथ० सं० ७, २६, ४)। मेधातिथेरार्षम्। प्रायश्चित्ते आज्यासादने च विनियोग.। यदिदं किञ्चिद्विभागेनावस्थितं तद्विक्रमते विष्णुरादित्यः। कथमिति? यत आह—त्रेधा निदधे पदम्' "निधत्ते पदम्" निधानं पदैः। क? तत्र तावत्—"पृथिव्यामन्तरिक्षे दिवीति शाकपूणि."। पार्थिवोऽग्निर्भूत्वा पृथिव्यां यत्किञ्चिदस्ति तद्विक्रमते, तदधितिष्ठति, अन्तरिक्षे विद्युदात्मना, दिवि सूर्य्यात्मना, । यदुक्तम्—"त मू अकृण्वन् त्रेधा भुवे कम्"—इति (ऋ० सं० ८, ४, ११, ५)। "समारोहणे" उदयगिरावुद्यन् पदमेक निधत्ते, "विष्णुपदे" मध्यन्दिनेऽन्तरिक्षे,

"गयशिरसि" अस्तङ्गिरौ।—"इत्यौर्णवाभ." आचार्यो मन्यते एवम्। "समूढ्हमस्य पांसुरे"। अस्मिन् "प्यायने" एतस्मिन् "अन्तरिक्षे" सर्वभूतवृद्धिहेतौ यन्मध्यन्दिनं "पदम्" विद्युदाख्यम्, तत् 'समूढ्हम्' अन्तर्हितं "न" नित्यं "दृश्यते"। तदुक्तम्—"स्वप्नमेतन्मध्यमं ज्योतिरनित्यदर्शनम्"—इति। "अपि वोपमार्थे स्यात्,—समूढ्हमिव पांसुले पद न दृश्यत इति" यथा पांसुले प्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकोर्णत्वात् न दृश्यते, एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकालमेव व्यवधीयते, नावतिष्ठत इत्यर्थः॥

"पांसुरे"—इति रो मत्वर्थः। अथ "पांसवः" कस्मात्? ते हि "पादैः सूयन्ते" जन्यन्त इत्यर्थः, अथवा "पन्नाः शेरत इति" अथवा "पिंशनीयाः" ध्वंसनीयाः ध्वंसनार्हाः ते "भवन्ति" तदाकीर्णस्य दुर्दर्शीकत्वात्॥ ८ (१६)॥

इति ऋज्वर्थायां निरुक्तवृत्तौ सप्तदशस्य (द्वादशस्य) अध्यायस्य द्वितीयः पादः॥ १२।२॥

——

## तृतीयः पादः ।

विश्वानरो व्याख्यातस्तस्यैष निपातो भवत्यैन्द्र्यामृचि ॥ १ (२०) ॥

"विश्वानरः" वक्तव्यः । स पुनरेषः "व्याख्यातः" अविद्यानव्युत्पत्तितः,—"प्रत्यृतः सर्वाणि भूतानि"—इति, इह तु नियमतो द्यु स्थानः ॥

"तस्यैष निपातो भवन्त्यैन्द्र्यामृचि"—॥ १ (२०) ॥

विश्वानरस्य वस्पतिमनानतस्य शवसः । एवैश्च चर्षणीनामूती हुवे रथानाम् ॥ विश्वानरस्यादित्यस्यानानतस्य शवसो महतो बलस्यैवैश्च कामैरयनरवनैर्वा चर्षणीनां मनुष्याणामूत्या च पथा रथानामिन्द्रमस्मिन् यज्ञे ह्वयामि वरुणो व्याख्यातस्तस्यैषा भवति ॥ २ (२१) ॥

"विश्वानरस्य वस्पतिम्" - इति (ऋ० सं० ६, ५, १, ४ । सा० सं० छ० आ० ४, २, ३, ५) । 'आ त्वा रथं यथोतये"— इत्येतस्मिन्नैन्द्रे सूक्ते प्रियमेधेन दृष्टे निष्केवल्ये विनियोग । 'विश्वानरस्य' "आदित्यस्य" "अनानतस्य" शवसः' अनानतः ' ज्योतिर्बलस्य अनभिभूतप्रकाशस्यान्यैर्ज्योतिर्भिः बलपतिं पातारं

रक्षितारमिन्द्रम् अस्मिन् यज्ञे 'वः' युष्माकमर्थसिद्धये आह्वयामः। केन ? इति—"एवैश्च" "कामैरयनैः" 'चर्षणीनां' "मनुष्याणाम्" "अवनैः" गमनैः त प्रति निमित्तभूतैः। 'ऊती' "ऊत्या च" "पथा" येन मार्गेन रंहणा, रश्मय इमं लोकमागच्छन्ति, तेन पथा भवतामहमिन्द्रमाह्वयामि॥

"विश्वानरस्य वस्पतिम्"—इति पतिशब्देनेन्द्रवाचिनो व्यपदेशात् षष्ठ्यन्तस्य विश्वानरशब्दस्य द्युस्थानवाचित्वे सामर्थ्यमुपपद्यते॥

"वरुणः" "व्याख्यातः" निर्वचनात्, इहत्वादित्यः॥

"तस्य एषा भवति"—॥ २ (२१)॥

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि॥ भुरण्युरिति क्षिप्रनाम भुरण्युः शकुनिर्भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोढा तत्सम्पाती भुरण्युरनेन पावकख्यानेन। भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि। तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्याम्॥ ३ (२२)॥

"येना पावक चक्षसा"—इति (ऋ० सं० १, ४, ७, ५। सा० सं० आर० आ० ५ द० ११)। प्रस्कण्वस्यैताः सर्वा आर्षम्। आश्विने विनियोगः। "भुरण्युरिति क्षिप्रनाम"। 'भुरण्युः' क्षिप्रगामी "शकुनिः"। स पुनरयमेव योऽधियज्ञे

अग्निश्चीयते स सुपर्णः। विज्ञायते हि—"स्वर्गाय वै लोकायाग्निश्चीयते"—इति। "तद्सम्पाती" तेन शुक्रोऽग्निचिदुपात्तापूर्वसम्भारः। स्वर्गं लोकं प्रति तदैव शीघ्रं यः पतति, गन्तुमिच्छति, स भुरण्यति। हे भगवन्! 'वरुण'! 'पावक' पावयितः! 'येन' "ख्यानेन" दर्शनेन अनुग्राहकेण 'त्वं' पुण्यकृतो 'जनाननु भुरण्यन्त' पूर्वेषां पुण्यकृतां मार्गेण देवयानेन क्षिप्रं गच्छन्तमनुपश्यसि। किं तस्य दर्शनस्येति अपरिसमाप्तं वाक्यमिति यद्वृत्तमपेक्ष्य तद्वृत्तमध्याजहार। "तत्ते" दर्शनमनुग्राहकं "वयं स्तुम."—इति वाक्यशेष ॥

"अपि वोत्तरस्याम्"। अपि चैवं यथोक्तमपि चैवमन्यथा स्यात्। कथमिति? यथोत्तरा ऋक्, तथापि सहैकवाक्यतोपेक्ष्या। कथम्? इति, यत. पुनः पठति—॥ ३ (२२) ॥

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि ॥ वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः। पश्यञ्जन्मानि सूर्य्य ॥ व्येषि द्यां रजश्च पृथु महान्तँल्लोकमहानि च मिमानो अक्तुभी रात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य्यापि वा पूर्वस्याम् ॥ ४ (२३) ॥

"येना पावक"—इति। 'येन' हे 'पावक'! 'वरुण'! 'चक्षसा' "ख्यानेन" 'जनान् अनु भुरण्यन्तं पश्यसि'—तेनैव ख्यानेन तयैव ख्याता प्रज्ञया शुक्रस्त्वं 'विद्यामेषि' विविधमेषि

विप्रकीर्णो विजृम्भत इति तमबहुश्रुतो नालमुत्प्रेक्षितुमिति,—युक्तं यत्तत्परिज्ञानयोगे भूयोविद्यः प्रशस्यत इति। पुरस्तादपि चैतदुक्तम्, इह तु प्रसङ्गादुच्यते॥

अतः परमागमविशुद्धये प्रस्तौति।—"मनुष्या वा ऋषिषु उत् क्रामत्सु देवानब्रुवन्"—इति। पूर्वमपि हि साक्षात्कृतधर्माण ऋषयो बभूवुः"—इत्युक्तम्, इह तु मन्त्रार्थाभ्युपप्रदर्शनार्थमिति विशिष्यते—"मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यति"—इति। एवमादिपुराकल्परूपोऽर्थविदः शास्त्रावतारस्तुतये, तेभ्यः "एतं मन्त्रार्थचिन्ताभ्यूहमभ्यूहं प्रायच्छन्" ते देवाः एतं समस्तार्थमूहमपि भवन्तोऽनेन मन्त्रार्थान् शक्यन्तेऽभ्यूहितुमिति। यस्मादेतदेवं "तस्मात्" अस्मिन्सूक्ते निरुक्तशास्त्रे यः "अनूचान." विद्वान्, यदेव किञ्चिन्मन्त्रार्थेषु "अभ्यूहति" "आर्षं तत् भवति" तथैव तदृषयोऽभ्यूहितवन्त,इत्यभिप्रायः॥ १२॥

हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः। अत्राह त्वं विजहुर्वेद्याभिरोहब्रह्माणो विचरन्त्युत्वे॥ हृदा तष्टेषु मनसाम्प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिरोहब्रह्माण ऊहब्रह्माण ऊह एषां ब्रह्मेतिवा सेयं विद्या श्रुतिमतिबुद्धिस्तस्यास्तपसा पारमीप्सि-

तव्यं तदिदमायुरिच्छता न निर्वक्तव्यं तस्माच्छन्दःसु शेषा उपेक्षितव्या अथागमो यां यां देवतां निराह तस्या-स्तस्यास्ताद्भाव्यमणुभवत्यनुभवति ॥ १३ ॥

न तत् स्वमनीषिकयोच्यते, मन्त्रार्थोऽप्येतस्मिन् विषये बृह-स्पतिना दृष्टो ब्रह्म वा स्वयं प्राह। तद्यथा,—

"हृदातष्टेषु"—इति (ऋ० सं० ८, २, २४, ३। १० ६, ३ ८)। 'हृदा' हृदयेन बुद्ध्या, 'तष्टेषु' सूक्ष्मतामापादितेषु अचि-न्त्याध्यात्मादिषु विद्वद्भिः, 'मनसो जवेषु, "मनसा" "प्रजवेषु" ये प्रजवाः प्रगमाः न साक्षात्ते दृश्यन्ते, तेष्वर्थेषु स्वर्गापूर्वदेवतादिषु 'ब्राह्मणाः' अधिगतमन्त्रार्थतत्त्वा' विचारयन्तः,—किमत्र तत्त्वं किं वा अतत्त्वमिति, प्रवचनेन ततः 'सयजन्ते' परस्परेण संपूज-यन्ति। कतमे ते ? इति,—'सखायः' "समानख्यानाः ऋत्विजः" ते हि प्रयोगे अभियुक्तत्वाददतितरां विद्वांसः। तेषु किम् ? इति —"अत्राह त्वम्"—इति। 'अत्र' तत्र तेषु अर्थेषु सूक्ष्मेषु 'विजहुः" तत्यजुः, 'त्वम्' एकम् त्यक्तवन्त.। मन्त्रार्थव्याख्याने कमविद्वांसं के न तत्यजुः ? 'वेद्याभिः' "वेदितव्याभिः" "प्रवृ-त्तिभिः" न हि तासां मनोवृत्तीनामन्तोऽस्ति, यासु प्रतिभानवता-मपि मनोवृत्तयो न प्रवर्त्तन्ते, अतस्ता वेदितव्या एव भवन्त्यवि-द्वद्भिः। ये पुनः 'ओहब्रह्माणः'। इदं निरुक्तशास्त्रम् ऊहब्रह्म, येषामस्ति ते शब्दार्थसङ्कटेष्वप्रतिबध्यमाना अतिक्रम्य अविद्वांस 'वि' विशेषतः सर्वत्रैव प्रतिपूज्यमानाः 'चरन्ति 'त्वे' एके इत्यर्थः ॥

एवमेतस्मिन्मन्त्रे अस्या उद्ग्राहितार्थानेवोद्दिश्य मन्त्रार्थचिन्ताभ्यूहस्य ब्रह्मत्वं श्रूयते। तस्मादिदमपि निरुक्तशास्त्रं ब्रह्मैव वेद इत्यर्थः॥

इदानीमुपसंहरति—"सेयं विद्या"—इति। श्रुतिमतीत्याद्यर्थमेवैका विद्या बुद्धिं वर्धति, ज्यायसी सर्वाभ्यो विद्याभ्यो महानेष तर्कः। "तस्याः तपसा पारमीप्सितव्यम्" गन्तुमिति वाक्यशेषः। पदवाक्यप्रमाणविदा ब्राह्मणेन यस्माद्वेदो विधिनिषेधप्रतिप्रसवनियमपरिसङ्ख्यापुनर्वचनपरार्थवादगहनः, अर्थवादाश्च यथाश्रुतप्रमाग्राहिणो विदुषोऽपि परमभ्रान्तहेतवः, तस्मात् परमदुर्विज्ञानवेदनीयत्वात् वेदवाक्यानामिमां विद्यामन्तरेण सम्यगर्थावगमो न भवति। अतोऽस्या अखिलपुरुषार्थोपकारप्रवृत्ताया अन्तरेण तपःपारगमनं नास्तीत्यत इदमुक्तमाचार्येण "तस्यास्तपसापारमीप्सितव्यम्" इति, अयमभ्युपायः तस्याःपारगमने। "तदिदम्" अतपस्विना सर्वथापि "आयुरिच्छता" निरुक्तशास्त्रं "न निर्वक्तव्यम्" अतपस्वी ह्यागमवान् अपि मलिनान्तःकरणत्वान्न शक्नुयात्, ततोऽस्यायुश्छिद्येत, तपस्विनापि च निर्ब्रुवता "तस्मात्" "छन्दःसु" शाखान्तरेषु निगमोदाहरणानामाकाङ्क्षित्वनिराकाङ्क्षायै "शेषाः" वाक्यशेषाः, पादार्कर्चादिलक्षणाः उपेक्षितव्याः॥ १३॥

इति ऋज्वर्थायां निरुक्तवृत्तौ अष्टादशाध्यायस्य

(त्रयोदशाध्यायस्य) प्रथमः पादः॥ १३। १॥

जम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्य्यस्य कृतौ

ऋज्वर्थायां निरुक्तवृत्तौ

अष्टादशाध्यायः (त्रयोदशाध्यायः) समाप्तः ॥ १३ ॥

इति सपादसप्तदशाध्यायी ऋज्वर्था नाम

निरुक्तवृत्तिः समाप्ता ॥

व्याख्यातं दैवतं यज्ञाङ्गञ्चेत्यादि ॥

---

(१) (२) (३) (४) (५) (६) (७)
(अथेमायद्यावोयदुदश्नोविहिंसोतोः सृण्येवतरत्सचत्वा-
(८) (९) (१०) (११) (१२)
रिसृङ्गास्वर्य्यन्तश्चत्वारिवागृचो अक्षर आदित्य इत्यक्षर-
(१३)
न्नक्षरतिहृदातष्टेषु त्रयोदश ॥

इति निरुक्ते त्रयोऽदशाध्यायः समाप्तः ॥ १३ ॥

(अतिस्तुति प्रकरणं समाप्तम्)।

इति निरुक्ते प्रथमं परिशिष्टं समाप्तम् ॥ १ ॥

---

# अथ चतुर्दशाध्यायः । *

अथवा त्रयोदशस्यैव द्वितीयादिस्त्रिपादी ।

तत्राद्यः, द्वितीयपादः ।

व्याख्यातं दैवतं यज्ञाङ्गं चाथात ऊर्द्ध्वमार्गगतिं व्याख्यास्यामः सूर्य्य आत्मेत्युदितस्य हि कर्मद्रष्टाऽथै-तदनुप्रवदन्त्यथैतं महान्तमात्मानमेषगणः प्रवदन्तीन्द्रं मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा अहमस्मि प्रजमजा इत्येताभ्याम् ॥ १ (१४) ॥ १ ॥

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतम्म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ अहमस्मि प्रथमजा ऋतस्य पूर्वन्देवेभ्यो अमृतस्य नाम । यो मा ददाति स इदेव मावदहमन्न-मन्नमदन्तमद्मि ॥ इति स ह ज्ञात्वा प्रादुर्बभूवैवं तं व्याजहारा यं तमात्मानमध्यात्मजमन्तिकमन्यस्मा आ चचक्ष्वेति ॥ २ (१५) ॥ २ ॥

---

* वृत्तिकृन्मते एषः अध्यायो नास्ति ।

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चर-न्तम्। स सध्रीचीः स विषूचीर्वसान आवरीवर्त्ति भुव-नेष्वन्तः॥ आवरीवर्त्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद् ब्रह्म तत् सत्यं तत् सलिलं तद-व्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुल्कं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके तत् क्षेत्रं तज्-ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठ-त्यभितो रजस्तमसी रजः इति कामद्वेषस्तम इत्यविज्ञा-तस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते परिभाति लिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाश-लिङ्गस्तमोऽपि निश्चयलिङ्ग आकाशः॥३ (१६) ३॥

आकाशगुणः शब्द आकाशाद्वायुर्द्विगुणः स्पर्शेन वायोर्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसे-नाद्भ्यः पृथिवी पञ्चगुणा गन्धेन पृथिव्या भूतग्रामस्थावर-जङ्गमास्तदेतदहर्युगसहस्रं जागर्त्ति तस्यान्ते सुषुप्स्यन्न-ङ्गानि प्रत्याहरति भूतग्रामाः पृथिवीमपि यन्ति पृथिव्यप आपो ज्योतिषं ज्योतिर्वायुं वायुराकाशमाकाशो मनो मनो

विद्यां विद्या महान्तमात्मानं महानात्मा प्रतिभां प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावेतावहोरात्रावजस्रं परिवर्त्तेते स कालस्तदेतदहर्भवति युगसहस्रपर्यन्तमहर्यद् ब्रह्मणो विदुः रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जना इति ॥ ४ (१७) ॥ ४ ॥

तं परिवर्त्तमानमन्योऽनुप्रवर्त्तते स्रष्टा द्रष्टा विभक्तातिमात्रोऽहमिति गम्यते स मिथ्यादर्शनेदम्पावकं महाभूतेषु चिरोण्वाकाशाद्वायोः प्राणाः चक्षुश्च वक्तारञ्च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्त्तिः पार्थिवांस्त्वष्टौ गुणान् विद्यात् त्रीन्मातृतस्त्रीन् पितृतोऽस्थिश्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृतोऽन्नं पानमित्यष्टौ सोऽयं पुरुषः सर्वमयः सर्वज्ञानोऽपि क्लृप्तः ॥ ५ (१८) ॥ ५ ॥

स यद्यनुरुध्यते तद्भवति यदि धर्मोऽनुरुध्यते तद्देवो भवति यदि ज्ञानमनुरुध्यते तदमृतो भवति यदि काममनुरुध्यते संच्यवत इमां योनिं सन्दध्यात् तदिदमत्र मतं श्लेष्मा रेतसः सम्भवति श्लेष्मणो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नाव्नोऽस्थीन्यस्थिभ्यो मज्जा मज्जातो रेतस्तदिदं योनौ रेतः सिक्तं

पुरुषः सम्भवति शुक्रातिरेके पुमान् भवति शोणितातिरेके स्त्री भवति द्वाभ्यां समेन नपुंसको भवति शुक्रेण भिन्नेन यमो भवति शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत् कथमिदं शरीरं परं सयम्यते सौम्यो भवत्येकरात्रोषितं कललं भवति पञ्चरात्राद् बुद्बुदाः सप्तरात्रात् पेशी द्विसप्तरात्रादर्बुदः पञ्चविंशतिरात्रः स्वस्थितो घनो भवति मासमात्रात्कठिनो भवति द्विमासाभ्यन्तरे शिरः सम्पद्यते मासत्रयेण ग्रीवाव्यादेशो मासचतुष्केण त्वग्व्यादेशः पञ्चमे मासे नखरोमव्यादेशः षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति सप्तमे चलनसमर्थो भवत्यष्टमे बुध्याध्यवस्यति नवमे सर्वाङ्गसम्पूर्णो भवति। मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नाना योनिसहस्राणि मयोषितानि यानि वै। आहारा विविधा भुक्ताः पीता नानाविधा स्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा। अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः। साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकमिति ततश्च दशमे मासे प्रजायते जातश्च वायुना स्पृष्टो न स्मरति जन्ममरणेऽन्ते च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ (१९) ६ ॥

अष्टोत्तरं सन्धिशतमष्टाकपालं शिरः सम्पद्यते षोडश वपापलानि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्मणामर्द्ध-चतस्रो रोमाणि कोट्यो हृदयं ह्यष्टकपालानि द्वादशकपा-लानि जिह्वा वृषणौ ह्यष्टसुपर्णौ तथोपस्थगुदपाय्वेतन्मू-त्रपुरीषं कस्मादाहारपानसिक्तत्वानुपचितकर्माणावन्योन्यं जयेते इति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्य-ज्ञानतमसि मग्नौ जरामरणक्षुत्पिपासाशोकक्रोधलोभमोह-मदभयमत्सरहर्षविषादेर्ष्यासूयात्मकैर्द्वन्द्वै रभि भूयमानः सोऽस्मादार्जवञ्जवीभावानां तन्निर्मुच्यते सोऽस्मापान्नं महाभूमिकावच्छरीरान्निमेषमात्रैः प्रक्रम्य प्रकृतिरभिप-रीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलमनुभूय तस्य सङ्क्षये पुनरिमँल्लोकं प्रतिपद्यते ॥ ७ (२०) ॥ ७ ॥

अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीय-माणपक्षमपक्षीयमाणपक्षाद्दक्षिणायनं दक्षिणायनात् पितृलोकं पितृलोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं वृष्टेरोषधयश्चैतद्भूत्वा तस्य सङ्क्षये पुनरेवेमँल्लोकं प्रतिपद्यते ॥ ८ (२१) ॥ ८ ॥

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानिवा कर्माणि कुर्वन्ति तेऽर्चिरभिसम्भवन्त्यर्चिषो-ऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षादुदगयनमुदगयना-द्देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतान्मानसं मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसम्भवन्ति ते न पुनरावर्त्तन्ते शिष्टा दन्दशूका य इदं न जानन्ति तस्मा-दिदं वेदितव्यमथाप्याह ॥ ९ (२२) ॥ ९ ॥

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशा-सश्चरन्ति ॥ न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्य-क्षरं ब्रह्मणस्पतिमन्यद्युष्माकमन्तरमन्यदेषामन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशासः प्राणं सूर्य्यं यत्पथगामिनश्चरन्त्यविद्वांसः क्षेत्रज्ञमनुप्रवद-न्त्यथाहो विद्वांसः क्षेत्रज्ञोऽनुकल्पते तस्यतपसा सहा-प्रमादे मेत्यथाप्तव्यो भवति तेनासन्ततमिच्छेत्तेन सख्यमिमिच्छेदेष हि सखा श्रेष्ठः सञ्जानाति भूतं भवद्भविष्यदिति ज्ञाता कस्माज्जायतेः सखा कस्मात् सख्यतेः सह भूतेन्द्रियैः शेरते महाभूतानि सेन्द्रियाणि

प्रज्ञया कर्म कारयतीति वा तस्य यदापः प्रतिष्ठाशीलमुपशम आत्मा ब्रह्मेति स बृहद्भूतो भवति साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञानकृतोऽथात्मनो महतः प्रथमं भूतनामधेयान्यनुक्रमिष्यामः ॥ १० (२३) ॥ १०

हंसः। घर्मः। यज्ञः। वेनः। मेघः। कृमिः। भूमिः। विभुः। प्रभुः। शम्भुः। राभुः। बधकर्मा। सोमः। भूतम्। भुवनम्। भविष्यत्। आपः। महत्। व्योम। यशः। महः। स्वर्णीकम्। स्मृतीकम्। स्वृतीकम्। सतीकम्। सतीनम्। गहनम्। गभीरम्। गह्वरम्। कम्। अन्नम्। हविः। सद्म। सदनम्। ऋतम्। योनिः। ऋतस्य योनिः। सत्यम्। नीरम्। हविः। रयिः। सत्। पूर्णम्। सर्वम्। अक्षितम्। बर्हिः। नाम। सर्पिः। अपः। पवित्रम्। अमृतम्। इन्दुः। हेम। स्वः। सर्गाः। शम्बरम्। अम्बरम्। वियत्। व्योम। बर्हिः। धन्व। अन्तरिक्षम्। आकाशम्। आपः पृथिवी। भूः। स्वयम्भूः। अध्व। पुष्करम्। सगरम्। समुद्रः। तपः। तेजः। सिन्धुः। अर्णवः। नाभिः।

ऊर्धः । वृक्षः । तत् । यत् । किम् । ब्रह्म । वरेण्यम् । हंसः । आत्मा । भवन्ति । वर्धन्ति । अध्वानम् । यद्वाहिष्व्या । शरीराणि । अन्ययश्च संस्कुरुते । यज्ञः आत्मा भवति । यदेनं तन्वतेऽथैतं महान्तमात्मानमेतानि सूक्तान्येता ऋचोऽनुप्रवदन्ति ॥ ११ (२४) ॥ ११ ॥

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्य्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ सोमः पवते जनयिता मतीनां जनयिता दिवो जनयिता पृथिव्या जनयिताग्नेर्जनयिता सूर्य्यस्य जनयितेन्द्रस्य जनयितोत विष्णोः सोमः पवते सोमः सूर्य्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणामादित्यरश्मीनां दिवो द्योतनकर्मणामादित्यरश्मीनां पृथिव्याः प्रथनकर्मणामादित्यरश्मीनामग्नेर्गतिकर्मणामादित्यरश्मीनां सूर्य्यस्य स्वीकरणकर्मणामादित्यरश्मीनामिन्द्रस्यैश्वर्य्यकर्मणामादित्यरश्मीनां विष्णोर्व्याप्तिकर्मणामादित्यरश्मीना मित्यधिदैवतमथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपि वा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगतिमाचष्टे ॥ १२ (२५) ॥ १२ ॥

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्र–मत्येति रेभन् ॥ ब्रह्मा देवानामित्येष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनां पदवीः कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनामृषिर्वि-प्राणामित्येष हि ऋषिणो भवति विप्राणां व्यापनकर्मणा–मादित्यरश्मीनां महिषो मृगाणामित्येष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां श्येनो गृध्राणामिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणो गृध्र आदित्यो भवति गृध्यते स्थानकर्मणो यत एतस्मिंस्तिष्ठति स्वधि-तिर्वनानामित्येष हि स्वयङ्कर्माण्यादित्यो धत्ते वनानां वननकर्मणामादित्यरश्मीनां सोमः पवित्रमत्येति रेभन्नि-त्येष हि पवित्रं रश्मीनामत्येति स्तूयमान एष एवैतत् सर्वमक्षरमित्यधिदैवतमथाध्यात्मं ब्रह्मा देवानामित्यय-मपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणां पदवीः कवीनामित्ययमपि पदं वेत्ति कवीनां कवीयमानानामि-न्द्रियाणामृषिर्विप्राणामित्ययमप्यृषिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणां महिषो मृगाणामित्ययमपि

महान् भवति मृगाणां मार्गणकर्मणामिन्द्रियाणां श्येनो गृध्राणामिति श्येन आत्मा भवति श्यायतेर्ज्ञानकर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञानकर्मणो यत एतस्मिंस्तिष्ठति स्वधितिर्वनानामित्ययमपि स्वयङ्कर्माण्यात्मनि धत्ते वनानां वननकर्मणात्मन्द्रियाणां सोमः पवित्रमत्येति रेभन्नित्ययमपि पवित्रमिन्द्रियाण्यत्येति स्तूयमानोऽयमेवैतत् सर्वमनुभवत्यात्म गतिमाचष्टे ॥ १३ (२६) ॥ १३ ॥

तिस्रो वाच ईरयति प्र वह्नि ऋतस्य धीतिं ब्रह्मणो मनीषाम् । गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यृतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमित्यधिदैवतमथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमतामृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगतिमाचष्टे ॥ १४ (२७) ॥ १४ ॥

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः । सोमः सुतः पूयते अज्यमानः सोमे

अर्कास्त्रिष्टुभः सन्नवन्ते ॥ एत एव सोमं गावो धेनवो रश्मयो वावश्यमानाः कामयमाना आदित्यं यन्त्येमेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्त्येवमेव सोमः सुतः पूयते अज्यमान एतमेवार्काश्च त्रिष्टुभश्च सन्नवन्ते तत एतस्मिन्नादित्य एकं भवन्तीत्यधिदैवतमथाध्यात्ममेत एव सोमं गावो धेनव इन्द्रियाणि वावश्यमानानि कामयमानान्यात्मानं यन्त्येवमेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्त्येवमेव सोमः सुतः पूयते अज्यमान इममेवात्मा च सप्त ऋषयश्च सन्नवन्ते तानीमान्येतस्मिनात्मन्येकं भवन्तीत्यात्मगतिमाचष्टे ॥ १५ (२८) ॥ १५ ॥

अक्रान् समुद्रः प्रथमे विधर्मं जनयन् प्रजा भुवनस्य राजा। वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुः ॥ अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुरित्यधिदैवतमथाध्यात्ममत्यक्रमीत्

समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये महत् सोमो वावधे सुवान इन्दुरित्यात्मगतिमाचष्टे ॥ १६ (२६) ॥ १६ ॥

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्। अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्य्ये ज्योतिरिन्दुः ॥ महत्तत् सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवानामाधिपत्यमदधादिन्द्रे पवमान ओजोऽजनयत्सूर्य्ये ज्योतिरिन्दु रादित्य इन्दुरात्मा ॥ १७ (३०) ॥ १७ ॥

विधुन्दद्राणं समने बहूनां युवानं सन्तं पलितो जगार। देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ विधुं विधनशीलं दद्राणं दमनशीलं युवानं चन्द्रमसं पलित आदित्यो गिरति सद्यो म्रियते स दिवा समुदितेत्यधिदैवतमथाध्यात्मं विधुं विधमनशीलं दद्राणं दमनशीलं युवानं महान्तं पलित आत्मा गिरति रात्रौ म्रियते रात्रिः समुदितेत्यात्मगतिमाचष्टे ॥ १८ (३१) ॥ १८ ॥

साकञ्जानां सप्तथमाहुरेकजं षलिद्यमा ऋषयो देवजा इति। तेषामिष्टानि विहितानि धामश स्थात्रे रेजन्ते विकृतानि रूपशः। सहजातानां षण्णामृषीणामादित्यः सप्तमस्तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह सम्मोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि तेभ्यः पर आदित्य-स्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतमथाध्यात्मं सहजातानां षण्णामिन्द्रियाणामात्मा सप्तमस्तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह सम्मोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ॥ १९ (३२) १९ ॥

इति नैरुक्ते त्रयोदशस्यैव द्वितीयः पादः समाप्तः ॥

अथ तृतीयः पादः।

स्त्रियः सतीस्ताँ उमे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः। कविर्यः पुत्रः स ई मा चिकेत यस्ता विजा-नात् स पितुष्पितासत्॥ स्त्रिय एवैताः शब्दस्पर्शरूपरसग-

न्धहारिण्यस्ता अमुं पुंशब्देन निराहारः प्राण इति पश्यन् कष्टान्न विजानात्यन्धः कविर्यः पुत्रः स इमा जानाति यः स इमां जानाति स पितुष्पितासदित्यात्मगतिमाचष्टे ॥ २० (३३) ॥ १ ॥

सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ते धीतिभिर्मनसा ते विपश्चितः परि भुवः परिभवन्ति विश्वतः ॥ सप्तैतानादित्यरश्मीनयमादित्यो गिरति मध्यस्थानोद्ध्र्वशब्दो यान्यस्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा च विपर्य्ययन्ति परिभुवः परिभवन्ति सर्वाणि कर्माणि वर्षकर्मणेत्यधिदैवतमथाध्यात्मं सप्तेमानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोद्ध्र्वशब्दो यान्यस्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा च विपर्य्ययन्ति परिभुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्मणेत्यात्मगतिमाचष्टे ॥ २१ (३४) ॥ २ ॥

न विजानामि यदि वेदमस्मि निण्यः सन्नद्धो मनसा चरामि । यदा मागन् प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥ न विजानामि यदि वेदमस्मि निण्यः प्रस-

न्नद्धो मनसा चरामि न हि विजानन् बुद्धिमतः पुष्टिः पुत्रः परिवेदयन्तेऽयमादित्योऽयमात्मा ॥ २२ (३५) ॥३॥

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ता शश्वन्ता विषूचीना वियन्तान्य१ न्यश्चिक्युर्न निचिक्युरन्यम् ॥ अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आदित्यो मर्त्येन मनसा सह तौ शश्वद्गामिनौ वश्वगामिनौ बहुगामिनौ वा पश्यत्यादित्यं न चन्द्रमसमित्यधिदैवतमथाध्यात्ममपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आत्मा मर्त्येन मनसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यात्मानं न मन इत्यात्मगतिमाचष्टे ॥ २२ (३६) ॥ ४ ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः । सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वेमदन्त्यूमाः ॥ तद्भवति भूतेषु भुवनेषु ज्येष्ठमादित्यं यतो जज्ञ उग्रस्त्वेषनृम्णो दीप्तिनृम्णः सद्यो जज्ञानो निरिणाति शत्रूनिति निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं विश्व ऊमा इत्यधिदैवतमथाध्यात्मं तद्भवति भूतेषु ज्येष्ठमव्यक्तं

यतो जायत उग्रस्त्वेषनृम्णो ज्ञाननृम्णः सद्यो जज्ञानो निरिणाति शत्रूनिति निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं सर्व ऊमा इत्यात्मगतिमाचष्टे ॥ २४ (३७) ॥ ५ ॥

को अद्य युङ्क्ते धुरिगा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्निषून् हृत्स्वसो मयोभून्य एषां भृत्या मृणधत्स जीवात्॥ क आदित्यो धुरि गा युङ्क्ते रश्मीन् कर्मवतो भानुमतो दुराधर्षानसून्य सुनवन्तीपूनिषुणवन्ति मयोभूनि सुखभूनि य इमं सम्भृतं वेद कथं स जीवतीत्यधिदैवतमथाध्यात्मं क आत्मा धुरि गा युङ्क्त इन्द्रियाणि कर्मवन्ति भानुमति दुराधर्षानसून्य सुनवन्तीपूनिषुणवन्ति मयोभूनि सुखभूनि य इमानि सम्भृतानि वेद चिरं स जीवतीत्यात्मगतिमाचष्टे ॥ २५ (३८) ॥ ६ ॥

कईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति। कस्तोकाय क इभायोत रायेऽधिब्रवत्तन्वे३ को जनाय॥ क एव गच्छति को ददाति को बिभेति को

मंसते सन्तमिन्द्रं कस्तोकायापत्याय महते च नो रणाय रमणीयाय दर्शनीयाय ॥ २६ (३९) ॥ ७ ॥

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः । कस्मै देवा आवहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥ क आदित्यं पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमार्थान् को मंसते वीतिहोत्रः सुदेवः कल्याणदेव इत्यधिदैवतमथाध्यात्मं क आत्मानं पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमार्थान् को मंसते वीतिहोत्रः सुप्रज्ञः कल्याणप्रज्ञ इत्यात्मगतिमाचष्टे ॥२७ (४०)॥ ८ ॥

त्वमङ्ग प्रशंसिषो देवः शविष्ठमर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ त्वमङ्ग प्रशंसीर्देवः शविष्ठ मर्त्यं न त्वदन्योऽस्ति मघवन् पाता वा पालयिता वा जेता वा सुखयिता वेन्द्र ब्रवीमि ते वच इति स्तुतिसंयुक्तम् ॥ २८ (४१) ९ ॥

इति निरुक्ते त्रयोदशाध्यायस्यैव तृतीयः पादः ॥

## अथ चतुर्थः पादः ।

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोण-सत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ हंस इति हंस सूर्य्यरश्मयः परमात्मा परं ज्योतिः पृथिवी व्याप्तेति व्याप्तं सर्व्वं व्याप्तं वननकर्म-णानभ्यासेनादित्यमण्डलेनेति त्ययतीति लोको त्ययतीति हंसयन्त्ययतीति हंसाः परमहंसाः परमात्मा सूर्य्यरश्मिभिः प्रभूत गभीर वसतीति त्रिभिर्वसतीति वा रश्मिर्वसतीति वावह्निर्वसतीति वा सुवर्णरेताः पूषा गर्भा रिभेति रिभन्ता वनकुटिलानि कुटन्ता रिभन्तान्तरिक्षा चरत्पथान्तरिक्षा चरदिति दिवि भुवि गमनं वा सुभानुः सुप्रभूतो होतादि-त्यस्य गता भवन्त्यतिथिर्दुरोणसत् सर्वे दुरोणसद् द्रवं सर्वे रसा विकर्षयति रश्मिर्विकर्षयति वह्निर्विकर्षयति वननम्भवत्यश्वगोजा अद्रिगोजा धरित्रिगोजाः सर्वे गोजा ऋतजा बहुशब्दा भवन्ति निगमो निगमव्यति भवत्यृपे निर्वचनाय ॥ २६ (४२) ॥ १ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्त्तारौ दुष्कृतं पापं परिसारकमित्याक्षते सुपर्णा सयुजा सखायेत्यात्मानं दुरात्मानं परमात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्षं रक्ष शरीरं वृक्षं पक्षो प्रतिष्ठापयति तयोरन्यद्भुक्त्वान्नमनश्नन्नन्यां सरूपतांसलोकतामश्नुतेय एवं विद्वाननश्नन्नन्यो अभिचाकशीतीत्यात्मगतिमाचष्टे ॥ ३० (४३) ॥ २ ॥

आयाहीन्द्र पथिभिरालितेभिर्यज्ञमिमं नो भागधेयञ्जुषस्व । तृप्तां जु हुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ।। आगमिष्यन्ति शक्रो देवतास्तास्त्रिभिस्तीर्थभिः शक्रप्रतरैरीलितेभिस्त्रिभिस्तीर्थैर्यज्ञामिमन्नो यज्ञभागमग्नीषोमभागाविन्द्रो जुषस्व तृप्तामेवं मातुलयोगकन्या भागं सतृकेव सा या देवतास्तास्तत्स्थाने शक्रं निदर्शतिम् ॥ ३१ (४४) ॥ ३ ॥

विप्रं विप्रासोऽवसे देवं मर्त्ता स ऊतये । अग्निं गीर्भिर्हवामहे ॥ विप्रं विप्रासोऽवसे विदुर्वेद विन्दतेर्वेदितव्यं विमलशरीरेण वायुना विप्रस्तु हृत्पद्मनिलयस्थित-

मकारसंहितमुकारं पूरयेन्मकारनिलयं गतं त्रिप्रं प्राणेषु विन्दुसिक्तं विकसितं वह्नितेजःप्रभञ्जनकपद्मेष्वमृतशरीरममृतजातस्थितममृतवाचामृतमुखे वदन्ति। अग्निङ्गीर्भिर्हवामहे। अग्निं सम्बोधयेदग्निः सवा देवता इति तस्योत्तरा भूयसे निर्वचनाय ॥ ३२ ॥ (४५) ॥ ४ ॥

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
जातवेदस इति जातमिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रलयन्यायेनाच्छाय सुनवाम सोममिति प्रसवेनाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमिति स्मो निश्चये निदहाति दहति भस्मीकरोति सोमो ददादित्यर्थः। स नः पर्षदति दुर्गाणि दुर्गमनानि स्थानानि नावेव सिन्धुं यथा कश्चित्कर्णधारो नावेव सिन्धोः स्यन्दनान्नदीं जलदुर्गां महाकूलान्तारयति दुरितात्यग्निरिति तानि तारयति तस्यैषापरा भवति ॥ ३३ (४६) ॥ ५

इदन्तेऽन्याभिरसमानमद्भिर्याः काश्च सिन्धुं प्रवहन्ति नद्यः। सर्पो जीर्णामिव त्वचं जहाति पापं

सशिरस्कोऽभ्युपेत्य ॥ इदन्तेऽन्याभिरसमानाभिर्याः च याश्च सिन्धुं पतिं कृत्वा नद्यो वहन्ति सर्पो जीर्णामिव सर्पस्त्वचन्त्यजति पापं त्यजन्त्याप आप्नोतेस्तासामेषा भवति ॥ ३४ (४७) ॥ ६ ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मा मृतात् ॥ त्र्यम्बको रुद्रस्तं त्र्यम्बकं यजामहे सुगन्धिं सुगन्धिं सुष्ठुगन्धिं पुष्टिवर्द्धनं पुष्टिकारकमिवोर्वारुकमिव फलं बन्धनादारोधनान्मृत्योः सकाशान्मुञ्चस्व मां कस्मादित्येषामितरेषापराभवति ॥ ३५ (४८) ॥ ७ ॥

शतं जीव शरदो वर्द्धमानः शतं हेमन्ताञ्छतमु वसन्तान् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ शतं जीव शरदो वर्द्धमान इत्यपि निगमो भवति शतमिति शतन्दीर्घमायुर्मरुत एना वर्द्धयन्ति शतमेनमेव शतात्मानं भवति शतमनन्तं भवति शतमैश्वर्यं भवति शतमिति शतं दीर्घमायुः ॥ ३६ (४९) ॥ ८ ॥

मा ते राधांसि मा त ऊतयो वसोऽस्मान् कदाचना दभन् । विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य

आ ॥ मा च ते धामानि मा च ते कदा च नः सरिषुः सर्वाणि प्रज्ञानान्युपमानाय मनुष्यहितोऽयमादित्योऽयमात्माऽथैतदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्गणः प्रवदति वैश्वकर्मणे देवानान्तु वयञ्जानानासदासीन्नो सदासीत्तदानीमिति च सैषात्मजिज्ञासा सैषा सर्वभूतजिज्ञासा ब्रह्मणः सार्ष्टिं सरूपतां सलोकतां गमयति य एवं वेद नमो ब्रह्मणे नमो महते भूताय नमः पारस्कराय नमो यास्काय ब्रह्मशुक्लमसीय ब्रह्म शुक्लमसीय ॥ ३७ (५०) ॥ ६ ॥

(१) (२) (३) (४)
व्याख्यातन्दैवतमग्निररिमजन्मनापश्यङ्गोपामाकाश-
(५) (६) (७) (८)
गुणस्तम्परिवर्त्तमानिमयग्रनुरुध्यतेऽष्टोत्तरमथयेहिंसामाश्रि-
(९) (१०) (११) (१२) (१३) (१४)
त्याथयेहिंमाम्नुसृज्यनतंइसांधर्मःसोमःपवतेब्रह्मादेवानान्ति-
(१५) (१६) (१७) (१८) (१९)
स्रोमाचर्ईरयतिसोमङ्गावोऽक्रान्महत्तत्सोमोविधुन्दद्राणंसाक-
(२०) (२१) (२२) (२३) (२४)
ज्ञानां स्त्रियःसतीःमप्तार्द्धगर्भानविजानाम्यपाङ्प्राङेतितदिदा-

(२५) (२६) (२७) (२८) (२९) (३०)
सकोअद्ययुङ्क्ते कईपतेको अग्निमीड्ढे त्वमङ्ग हंसः शुचिषद्-

(३१) (३२) (३३) (३४) (३५)
द्वासुपर्णाऽऽयाहीन्द्र विप्रंविप्रासो जातवेदसइदऽन्तेन्याभिस्त्र्य-

(३६) (३७)
म्बकंशतञ्जीवमातेराधांसीति सप्तत्रिंशत् ॥

(१) (२) (३) (४) (५) (६) (७)
अथेमायद्द्यावोयदुदश्वोविहिंसोतोसृण्येवतरत्सश्चत्वा-

(८) (९) (१०) (११) (१२)
रिशृङ्गास्वर्यन्तश्चत्वारिवागृचोअक्षर आदित्यइत्यक्षरन्नक्ष-

(१३) (१४) (१५) (१६)
रतिहृदातश्चेपुण्याख्यातन्दैवतमग्निरस्मिजन्मनापश्यङ्गोपा-

(१७) (१८) (१९) (२०) (२१)
माकाशगुणस्तम्परिवर्त्तमानंरायद्यनुरुध्यतेऽष्टोत्तरमथयेहिंसा -

(२२) (२३) (२४) (२५) (२६)
माश्रित्याथयेहिंसामुत्सृज्यनतंहंसोघर्मःसोमःपवतेब्रह्मादेवाना-

(२७) (२८) (२९) (३०) (३१)
न्तिसोवाचईरयतिसोमङ्गावोऽक्रान्महत्तत्सोमोविधुन्दन्द्रा -

(३२) (३३) (३४) (३५) (३६) (३७)
णंसाकञ्जानांस्त्रियःसतीःसप्तार्धगर्भानविजानाम्यपाङ्प्राङेति-

(३८) (३९) (४०) (४१) (४२)
तदिदासकोअद्ययुङ्क्ते कईषतेकोअग्निमीट्टेत्वमङ्गहंसः शुचि-
(४३) (४४) (४५) (४६) (४७) (४८)
पद्द्वासुपर्णाऽऽहीन्द्र विप्रं विप्रासोजातवेदसइदन्तेन्याभिस्त्य-
(४९) (५०)
म्बकंशतंजीवमातेराधांसीति पञ्चाशत् ॥

इति निरुक्ते चतुर्दशाध्यायः समाप्तः ॥ १४ ॥

( ऊर्ध्वमार्गगति प्रकरणं समाप्तम् )

इति नैरुक्ते द्वितीय-परिशिष्टं समाप्तम् ॥

( इति परिशिष्टम् )

---

॥ श्रीः ॥

# निरुक्ते दैवतकाण्डस्य शुद्धिपत्रम्

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ७१६ | ४ | वया | व्या |
| ७१८ | २० | ईष्ट | ईष्टे |
| ७२० | १५ | व्याप्न | व्याप्नु |
| ७२४ | १ | ह्य | ह्यु |
| ,, | ३ | दनयो | दनयोः |
| ,, | ६ | मन्त्र | मन्त्रे |
| ७२५ | ५ | मिन्द्रः | मिन्द्र |
| ,, | ६ | पूव्य | पूर्व्ये |
| ७२८ | ७ | आस्म | अस्मि |
| ,, | १४ | गूल्ह | गूल्व्ह |
| ,, | १६ | ,, | ,, |
| ७२९ | १६ | विकत्ति | विकर्त्ति |
| ७३० | १६ | भिक्ष | भिक्षु |
| ७३१ | १ | सा | सो |
| ७३३ | १० | तद्दवता | तद्देवता |
| ७३४ | ७ | प्रकणा | प्रकरणा |
| ७३७ | ५ | ऐन्दा | ऐन्द्रा |
| ७३८ | ३ | तस्य | - |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ७४० | १४ | एक | एकं |
| ७४१ | ,, | रीक्षम् | रिक्षम् |
| ७४२ | १६ | माहा | महा |
| ७४३ | १ | जन्म | जन्मा |
| ,, | १६ | द्वस्य | देवस्य |
| ,, | १६ | तद्रपा | तद्रूपा |
| ७४५ | ५ | उपोद्घातः | उपोद्‌घातः |
| ७४६ | २ | ग्रह | ग्रहं |
| ,, | १६ | अन्याथ | अन्यार्थ |
| ,, | १७ | वायं | वायुं |
| ७४८ | १२ | तस्मे | तस्मै |
| ,, | २० | सम्बन्वेन | सम्बन्धेन |
| ७५० | २ | कुवती | कुर्वती |
| ७५२ | ६ | वाया | वायवा |
| ७५४ | ४ | गृम्रणा | गृभ्णा |
| ,, | ७ | श्रुधा | श्रुधी |
| ७५५ | १५ | शन्दः | शब्दाः |
| ७५८ | १५ पंक्तयां ( 'षड्भिः' एतस्याग्रे– अथाष्टौ ? ततस्तैः 'अष्टाभिः' अथ दश ? ततस्तैः 'दशभिः' इति पाठो ज्ञेयः ) | | |
| ७५६ | १२ | मिव | पिव |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ७५६ | १४ | तुभ्य | तुभ्यं |
| ७६० | ६ | ब्र | ब्रु |
| ” | १२ | संभवव्य | संभवत्य |
| ” | १४ | कारण | कारणा |
| ” | १७ | विध | विधं |
| ७६२ | ६ | चरित्वात् | चरितत्वात् |
| ७६८ | १८ | सवया | अवया |
| ७७२ | ३ | सन्त | सन्तं |
| ७७४ | २१ | वुभुक्ष | वुभुक्ष |
| ७७६ | १६ | सुस | सुसं |
| ७७९ | १४ | द्य | द्यु |
| ” | ७ | लाक | लोक |
| ” | १२ | ” | ” |
| ७८० | १० | परन्तौ | परन्तौचरन्तौ |
| ७८१ | १२ | ऋतुञ्छ | ऋतुच्छ |
| ७८२ | २ | सुति | स्तुति |
| ” | ८ | स्तु | स्तुति |
| ७८५ | १३ | मित्गर्थः | मित्यर्थः |
| ७८७ | ४ | मावि | मानि |
| ” | ६ | चक्षः | चक्षुः |
| ७८९ | २ | समान | समामन |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ७६१ | १ | चतुथः | चतुर्थः |
| ,, | ६ | दिदघ | दिर्देव |
| ७६२ | ५ | साऽग्निः | सोऽग्निः |
| ,, | ७ | तवै | तत्रै |
| ,, | ८ | २, २, | २, ३, |
| ,, | ११ | विवि | विवः |
| ,, | १६ | तमेवं | तमेव |
| ७६३ | २ | अग्रीः | अग्रणीः |
| ,, | ११ | भिवायिनं | भिधायिनं |
| ,, | १६ | क्स्थित | वस्थित |
| ७६५ | १५ | पुरोहिता | पुरोहितो |
| ७६८ | ७ | कस्मत् पुनन | कस्मात्पुनर्न |
| ,, | १८ | मित्या | मित्यै |
| ७६६ | १३ | स्या | स्यो |
| ८०० | ८ | देवना | देवाना |
| ८०२ | २ | भजते | भजते |
| ,, | १० | एतमेव | एतदेव |
| ८०६ | ८ | मुयाच्यते | मुच्यते |
| ८११ | १६ | द्रुक | -द्रुक् |
| ,, | २० | अधूनात् | अधूनोत् |
| ८१६ | १० | हविष्या | हविष्पाः |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ८१६ | १४ | नैवः | नैव |
| ,, | १६ | कथन्त्वत्र | कथन्त्व |
| ८१८ | ४ | पत्वा | पत्या |
| ,, | १८ | शष्क | शुष्क |
| ८२० | ३ | पचमी | पचसी |
| ८२४ | ६ | इत्ये | इत्य |
| ८२६ | ३ | ३ | २ |
| ८३० | १२ | भक्तैः | भक्तैः |
|  | १३ | अस्मन् | अस्मिन् |
| ८३३ | २ | लक्षणानिं | लक्षणानि |
| ८३७ | १४ | कमार्थं | कर्मार्थं |
| ८३६ | ३ | यवन् | यावन् |
| ,, | ४ | निध | निधे |
| ,, | ५ | घसत | घसते |
| ,, | ८ | वृणत | वृणते |
| ८४१ | ३ | वैंश्व | वैंश्वा |
| ८४२ | ३ | प्रवन्त | प्रवन्ते |
| ,, | ५ | मन | मेन |
| ,, | ,, | मात्रम | मात्रमे |
| ८४७ | ६ | 'गाः' | 'गाः' अपः |
| ८५० | १६ | भवन्नि | भवन्ति |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ८५१ | ८ | अग्नि | अग्निः |
| ८५२ | १२ | विचित्रा | विचित्रो |
| ,, | १३ | ममध्या | मध्या |
| ८५४ | २ | विविधदा | विधतिर्दा |
| ८५५ | १७ | यथा | तथा |
| ८५७ | ८ | मनोति | सनोति |
| ८६१ | १६ | स्वक्ति | स्वशक्ति |
| ८६२ | १० | पुनः | पुत्रः |
| ८६५ | ५ | र्वज्ञं | र्यज्ञं |
| ८६७ | १० | तस्मिन्न | तस्मिन्नु |
| ८७१ | ३ | प्रघृज्यते | प्रवृज्यते |
| ,, | ६ | तदुद्धा | तद्वद्धा |
| ८७६ | २ | प्रचोदयमान | प्रचोदयमानौ |
| ,, | ११ | सुस्तुतौ | सुस्तुती |
| ,, | ,, | निर्मातारो | निर्मातारौ |
| ,, | १७ | उच्यते | उच्येते |
| ८७९ | ७ | मास्याय | मास्थाय |
| ८८१ | ४ | रात्र | रात्रे |
| ८८३ | ,, | व्वृतौ | वृतौ |
| ८८६ | १० | द्रत्य | द्रुत्य |
| ८९० | ,, | प्रदिश्य | प्रदिश्य |

| पत्राङ्कम् | पंक्ति | अशुद्धपाठ | शुद्धपाठः |
|---|---|---|---|
| ८९१ | " | प्रत्येक्त | प्रत्येक |
| ८९२ | ३ | म्रर्थ | ऩथ |
| ८९३ | १४ | मृपा | मृपी |
| " | १५ | अनयोरुत्त | अनयोत्त |
| ८९८ | ७ | गामा | गामी |
| " | १३ | पूच | पूर्व |
| ८९९ | ४ | ब्रवाति | ब्रवीति |
| ९०२ | १२ | धाताः | धातोः |
| " | १७ | क्षताभिः | क्षतादिभिः |
| ९०४ | ११ | प्रवा | प्रावा |
| | १३ | वाम्येपर्ग | वादिन्येपर्ग् |
| " | १८ | प्राचिट् | प्रावृट् |
| " | २० | मण्डकाः | मण्डूकाः |
| ९०५ | ३ | णाया | णयो |
| ९०६ | १४ | इरिण | इरिणं |
| ९०७ | १ | नस्र्यै | नस्यै |
| ९१९ | १० | शव्द | शव्दं |
| ९२२ | १३ | पङ्क्त्यां "स्फिग्देशाः" एतस्या- | |

ग्रे-तां श्च हे अश्वाजनि ? उपद्युति ? इदमपि शतत्येंव ।— इति पाठोज्ञेयः ।

| पत्राङ्कम् | पंक्ति | अशुद्धपाठ | शुद्धपाठः |
|---|---|---|---|
| ९२४ | ३ | द्युमत्तम | द्युमत्तमं |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ६२५ | १८ | गोमिना | गोमिनां |
| " | १६ | शाभन | शोभन |
| ६२६ | १ | सहस्र | सहस्रं |
| " | १३ | यस्यार्थ | तस्यार्थ |
| " | १८ | यानं शयेन | शयानयेन |
| " | १६ | ० | पृतनाज्येषु |
| ६३० | १८ | क्रमात् | क्रमत् |
| ६३२ | १६ | गुरुपस्य | पुरुपस्य |
| ६३४ | ८ | वभ्र | भ्रु |
| " | १५ | भवान्त | भवान्ति |
| ६३५ | २० | पालयित्रा | पालयित्री |
| ६३६ | १८ | विन्दती | विन्दतीँ |
| ६४२ | ११ | विहियेते | विंहियेते |
| " | १७ | हरा | हरी |
| ६४८ | १६ | वसुघे | वसुधे |
| ६५० | १५ | वह्वी | वह्नी |
| " | १६ | वृषभा | वृषभो |
| ६५१ | २ | ५० | ४० |
| " | १३ | अथाता | अथातो |
| ६५२ | १६ | गुणा | गुणो |
| ६५३ | १३ | वाह्वच्ये | वाह्वृच्ये |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ९५४ | १६ | श्रूत्वा | श्रुत्वा |
| ९६० | १३ | पुत्रषु | पुत्रेषु |
| ९६१ | १६ | द्यते | द्युते |
| ९६२ | ९ | धारयत | वेरां धारयत |
| ,, | १२ | इदन्ते | इन्दते |
| ९६४ | १४ | दीना | दिना |
| ९६५ | २० | भूपत् | भूपत् |
| ९६६ | ८ | इग्द्राग | इन्द्राय |
| ९६७ | १६ | विशपे | विशेषे |
| ९६९ | १ | वृक्षानु | वृक्षान् |
| ,, | १० | घहिन्तिव | विहन्तिवृ |
| ९७० | १५ | स र्तो | सर्वतो |
| ,, | १८ | जिघृक्ष | जिघृक्षु |
| ९७१ | १९ | इत | इति |
| ९७३ | १७ | सुष्ठ | सुष्ठु |
| ९७४ | ६ | यथाश्न | यथाश्नु |
| ,, | १५ | मूर्मि | मूर्मिं |
| ,, | १६ | श्चुत | श्चुतं |
| ९७६ | १० | पूव | पूर्वं |
| ,, | १३ | आचार्यतम् | आचार्यमतम् |
| ९७७ | १७ | क्षेमात् | क्षेमान् |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ९७८ | १८ | ह्य | ह्यु |
| ९७९ | ५ | तस्यैपा | तस्यैषा |
| ,, | ७ | गृकहार | गृकहारि |
| ९८० | ४ | यदं | यद् |
| ९८६ | १३ | पृथिवौ | पृथिवी |
| ,, | १६ | मया | मयो |
| ९८७ | २० | सोमा | सोमो |
| ९८८ | १९ | तस्या | तस्य |
| ९८९ | १ | घृतवञ्जु | घृतवज्जु |
| ,, | ४ | व | वा |
| ९९२ | १८ | गृह्णति | गृह्ण'ति |
| ९९४ | ७ | प्रवेशो | प्रवेश. |
| ९९५ | १२ | तत्रति | तत्रेति |
| ९९७ | ८ | स्वि | स्व |
| १००० | ११ | प्रकामेण | प्रक्रमेण |
| १००१ | ३ | पृथिवीञ्च | पृथिवीञ्चदिवञ्च |
| १००२ | ४ | ताक्ष्यः | तार्क्ष्यः |
| १००३ | ८ | आहयामहे | आह्वयामहे |
| १००६ | २ | पाप | षाप |
| १००९ | ९ | हिरण्ण | हिरण्य |
| १०१२ | १ | अत्तत् | तत्तत् |

| पत्राङ्कम् | पंक्ति | अशुद्धपाठ | शुद्धपाठः |
|---|---|---|---|
| १०१४ | ५ | तस्प | तस्य |
| १०१४ | ११ | रहन्तिमतिभा | मतिभीरहिन्ती |
| „ | १६ | गृहते | गृह्यते |
| १०१५ | ७ | विष्टेनं | वेष्टनं |
| १०१८ | ६ | प्रत्यत | प्रत्यृतं |
| १०१६ | १० | मणुष्य | मनुष्य |
| १०२२ | ६ | तथा | यथा |
| १०२५ | १५ | इत्यृप | इत्यृपे |
| १०२७ | ८ | ग्रुप | मुप |
| १०२८ | ३ | लक्ष्यते | लक्ष्यते |
| १०२६ | १२ | रुज | रज |
| १०३० | १ | सद्रुस्रा | सहस्र |
| „ | „ | प्रत्य | प्रेत्य |
| „ | १० | अयु | अयुतं |
| १०३६ | ८ | द्रपं | द्रूपं |
| १०३८ | १० | पश्च | पश्चा |
| १०३६ | ६ | पेक्ष्येमपि | पेक्ष्येयमपि |
| १०४२ | २१ | ज्यातिपा | ज्योतिषा |
| १०४३ | ५ | उच्छयति | उच्छ्रयति |
| १०४५ | ६ | माघवन् | मघवन् |
| १०४६ | १६ | सव | सर्वे |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १०४७ | १ | सुश्लष्टं | सुश्लिष्टं |
| १०४६ | ६ | अचि | अपि |
| १०५० | ५ | सन्ता | सन्तो |
| १०५३ | १७ | उदारता | उदीरता |
| १०५६ | १ | कल्याणां | कल्याण्यां |
| १०५६ | २ | ईश्वरतमम | ईश्वरतमम् |
| १०६१ | २० | दश्निणो | दक्षिणो |
| १०६२ | ३ | दक्षस्त्वत्ता | दक्षस्त्वत्तो |
| १०६३ | ६ | उत्तानप्रा | उत्तानपा |
| १०६४ | १६ | सरणातू | सरणात् |
| १०६५ | २ | कम्यासीत | कम्यासीत् |
| „ | ५ | सीत | सीत् |
| १०६६ | ६ | याजन | योजन |
| १०६७ | ५ | भ्यात्मान | भ्यात्मानं |
| „ | २१ | स्फट | स्फुट |
| १०६८ | १८ | मन्यते | मन्यन्ते |
| १०७० | ६ | पोर्ण | पौर्ण |
| १०७१ | ११ | वैश्ध | वैश्व |
| १०७२ | ८ | वाध | बोध |
| १०७३ | ४ | यद्यपि | यदपि |
| १०७४ | १५ | दि्शि | दिश |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १०७५ | ४ | पित्त्यं | पित्र्य |
| १०७६ | १७ | मुभयलाक | मुभयलोक |
| १०७६ | ६ | सुजातरः | सुजाततरः |
| „ | ७ | प्रवद्धयते | प्रवर्द्धयते |
| १०८२ | ६ | सेऽप्य | सोऽप्य |
| „ | १५ | नवपटो | नवपदी |
| १०८६ | १० | यव | येव |
| १०८७ | ४ | आहरे | आहरै |
| १०८७ | १६ | तृणं | तृण |
| १०६८ | ३ | तयोरेक | तयोरेकं |
| १०६६ | ० | १० | १ |
| „ | २ | वलस्येरर | वलस्येर |
| ११०० | ११ | मश्विना | मश्विनो |
| ११०५ | ० | ११ | १२ |
| „ | १२ | मात्मना | मात्मनो |
| ११०७ | ० | ११ | १२ |
| ११०६ | ० | ११ | १२ |
| १११८ | १ | अधारामः | अधोरामः |
| ११२१ | १ | समूव्वह | समूव्ह |
| „ | १० | या० | य० |
| ११२८ | ७ | द्यस्थान | द्युस्थाने |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ११२६ | १४ | जतान् | जनान् |
| ११२१ | २ | शचा | शची |
| ” | ६ | प्रकाम्प | प्रकम्प |
| ११३१ | १३ | गृहणन्ति | गृह्णन्ति |
| ११३१ | १० | ऋ० | ऋ० सं० |
| ११३२ | १२ | एक्तः | एकः |
| ११३४ | १२ | दवि | हवि |
| ११३५ | ६ | द्य | ग्र |
| ” | ८ | पय्यत्य | पर्य्यत्य |
| ” | १६ | ढधात्य | र्दधात्य |
| ११३६ | ५ | दव | देव |
| ११३८ | ११ | दध्यङ | दध्यङ् |
| ११४० | ५ | च्छन्दस्य | च्छन्दस्य |
| ११४३ | ११ | सुस्व | सुख |
| ” | १२ | लोक | लोकं |
| ११४७ | २ | मेका | मेक |
| ११५० | ८ | सज्यन्ते | ज्यन्ते |
| ११५४ | ६ | शाभ | शोभ |
| ११५६ | १४ | मस्ताः | मास्ताः |
| ११५८ | १० | जमया | ज्मया |
| ११५९ | १३ | वचम् | वचनम् |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ११६० | १८ | यदात्मानः | यदात्मनः |
| ११६२ | १ | वहवादी | यह्वादी |
| ,, | ७ | भुववानि | भुवनानि |
| ११६४ | १५ | स्त्रया | स्त्रयो |
| ११६५ | २ | यद्यज्ञा | यद्यज्ञो |
| ,, | ४ | यज्ञं | यज्ञं ये |
| ,, | १२ | मेधाचिना | मेधाविनो |
| ११६७ | ५ | क्षद्रस्य | क्षुद्रस्य |
| ११६८ | ६ | यज्ञात्म | यज्ञाध्यात्म |
| ११६९ | २१ | द्देवा | देवा |
| ११७२ | २ | यागे | योगे |
| ११७३ | ३ | मणु | मनु |
| ,, | २० | अचिद्वासं | अचिद्वांसं |
| ११७४ | १८ | पादार्क | पादार्द्ध |
| ११७७ | ९ | इय | इत्य |
| ,, | ११ | महानत्मा | महानात्मा |
| ११७८ | १८ | सिक्ति | सिक्तं |
| ११७९ | ११ | सर्षाङ | सर्षाङ् |
| ११८० | १४ | ० | चिरेण वेदाक्तानि |
| ११८४ | ४ | पदवोः | पदवीः |
| ,, | ११ | घनाता | घनानां |

| पत्राङ्कम् | पंक्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ११८५ | ५ | कर्मणात्म | कर्मणामि |
| ,, | ६ | ब्रह्मण | ब्रह्मणो |
| ११८६ | २ | यन्त्येमेव | यन्त्येवमेव |
| ,, | ११ | स्मिनात्म | ऽस्मिन्नात्म |
| ११८७ | ३ | वावधे | वावृधे |
| ,, | १२ | विधनशोलं | विधमनशीलं |
| ,, | १४ | विधं | विधुं |
| ११९० | ७ | वश्व | विश्व |
| ,, | ११ | २२ | २३ |
| ११९१ | ३ | सर्व | सर्वं |
| ,, | ११ | भानुमति | भानुमन्ति |
| ११९३ | ४ | हंस | हंसा |
| ११९४ | ५ | पक्षा | पक्षौ |
| ,, | १० | स्तीथ | स्तीर्थे |
| ११९५ | ७ | पषदति | पर्षदति |
| ,, | ११ | दित्यथः | दित्यर्थः |
| ११९७ | १० | वर्तमानि | वर्तमानं |
| ११९९ | २ | भिस्त्य | भिरुन्य |

इति निरुक्ते दैवतकाण्डस्य शुद्धाशुद्धि पत्रम्।

भागचतुष्टयेभ्रमप्रमादादिवशात् या अशुद्धयः स्युस्ताः शोधनीयाः कृपालुभिर्मतिमद्भिः।

—०*०—

ॐ तत्सत्।

"एवम् अवक्ष्यत्" मन्त्रकृत्। सोमा अरङ्कृताः तेषां पिबइति प्रसिद्ध हि इन्द्रस्य मध्यमस्य सोमपानम्, तदर्थत्वात् सोमसंस्कारस्य, अप्रसाध्यमन्यस्य। तस्मादिन्द्र एव वायुः ॥

"तस्य" इन्द्रस्य वायोः ऐन्द्रे एव सूक्ते यस्यामिन्द्रस्य विशेषणत्वेन वायुशब्दः, तथा "एषा" "अपरा" ऋक् "भवति"—॥२॥

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं विदस्येत् ॥

आससृवांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढार ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवञ्च पुराणञ्च श्रव इत्यन्ननाम श्रूयत इति सतो वायोश्चास्य भक्षो यथा न विदस्येदितीन्द्रप्रधानेत्येके नैघण्टुकंवायुकर्मोभयप्रधानेत्यपरं वरुणो वृणोतीति सतस्तस्यैषा भवति ॥ ३ ॥

"आसस्राणासः"—इति (ऋ० स० ४, ७, ६, १)। भरद्वाजस्यार्षम्। महाव्रते महदुक्थे शस्यते उत्तरे पक्षे। 'रथ्यासः' "रथ्याः" 'अश्वाः' 'सुचक्रे' "कल्याणचक्रे" "रथे" योगार्थम् 'इन्द्रं शवसानम् अच्छ' इन्द्रमभिबलायमानमधिकबलमात्मानं मन्यमानम्, 'आसस्राणासः' "आससृवांसः" नित्यमासर्पन्ति ये, तान् युक्त्वा रथेऽस्माकम्, आयाहि सोमपानाय यज्ञमिति।

किमस्माकं ते कुर्वन्तु ? इति । "अभिश्रव ऋज्यन्तो, वहेयुः" । "ऋजुगामिनः" भूत्वा 'श्रव' "अन्नम्" सोमाख्यमेतदस्मदीयं यत् । 'नूचित्' "नवं च पुराणं च" तत्पानाय एवमिन्द्रमभिवहेयुः । 'नु' क्षिप्रम् यथा "अस्य" 'वायोः' इन्द्रस्य इदम् 'अमृतम्' एव सोमभक्षः न 'विदस्येत्' । अविदस्तेऽनुपक्षीणे एतस्मिन् सोमभक्षेऽभिवहेयुः ।—इत्येतदाशास्महे ॥

"श्रवः"—"इति" एतत् "अन्ननाम" तद्धि सर्वत्र "श्रूयते" "नूचित्"—इति नवपुराणाभिधायकौ निपातौ । नवम्, यः सोमो गृहीत्वा तत्कालमेव हूयते । पुराणं पुनः, यः, प्रातःसवने गृहीत्वा माध्यन्दिने सवने हूयते, तृतीयसवने वा, तद्यथा—अतिग्राह्या ध्रुवश्च ॥

एवमेतस्मिन् मन्त्रे ऐन्द्रसूक्तमध्यपातित्वात् इन्द्रप्रधाने यद्वाय्वभिधानम्, तत् "नैघण्टुकम्" इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम् ।—"इति एके" । "अपरे" पुनः "उभयप्रधाना" इयमृक् "इति" मन्यन्ते भेदपक्षवादिनः, तत् पुनरयुक्तम्, निष्केवल्ये विनियोगात् ॥

"वरुणः" कस्मात् ? "वृणोतीति सतः" स हि वियद्‌ वृणोति मेघजालेन ॥

"तस्य एषा भवति" ॥ ३ ॥

नीचीनवारं वरुणः कवन्धं प्रससर्ज रोदसी अन्तरिक्षम् । तेन विश्वस्य भुवनस्य राजा यवन्न वृष्टिर्व्युनत्ति

भूम ॥ नीचीनद्वारं वरुणः कवन्धं मेघं कवनमुदकं भवति तदस्मिन्धीयत उदकमपि कवन्धमुच्यते बन्धिरनिभृतत्वे कमनिभृतञ्च प्रसृजति द्यावापृथिव्यौ चान्तरिक्षञ्च महत्त्वेन तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिं तस्यैषापरा भवति ॥ ४ ॥

"नीचीनबारम्"—इति (ऋ० सं० ४, ४, ३, ३)। अत्रेरार्षम्। न्यक् अञ्चते द्वारं यस्य, स भवति नीचीनद्वारः, अधोद्वारः, तं "नीचीनद्वारम्" अधोविलं कृत्वा 'कवन्धं' "मेघ" 'वरुणः' मध्यमः। अतएव मेघसम्बन्धात् "कवनम् उदकम्" 'प्रससर्ज' "प्रसृजति" महत्त्वेन, न ह्यमहानेतच्छक्नुयात् कर्त्तुम्। 'रोदसी अन्तरिक्षम् "द्यावापृथिव्यौ च अन्तरिक्षं च"। "महत्त्वेन, सर्वमापूरयिष्यन्निव। ततः तेन अतिप्रभूतोदकेन विसृष्टेन 'विश्वस्य भुवनस्य' भूतजातस्योदकस्य वा 'राजा' ईश्वरः 'यवं न' यवमिव, कश्चित् सत्कर्षी स्वल्पं 'वृष्ट्या' 'व्युनत्ति' विविधमुनत्ति क्लेदयति 'भूम' "भूमिम्" कृत्स्नाम् यः। सोऽस्माकमिदं नाम करोतु ॥

अथ चैवमन्यथा योज्यम्।—प्रसृजति द्यावापृथिव्यौ च अन्तरिक्षं च प्रकर्षेण सृजति उत्पादयति महत्त्वेन। यस्माच्चोत्पादयति, तस्मात् स एव भुवनस्य राजा विश्वस्य भुवनस्य भूतजातस्य, तेन हेतुना तदनुग्रहाय नीचीनद्वारम् अधोविलं मेघं कृत्वा यवमिव वृष्टिर्व्युनत्ति भूमिमिति समानं पूर्वेण ॥

कवन्ध इति मेघ उच्यते। कस्मात्? "कवनम्—उदकम्" कवतेर्गत्यर्थस्य "तदस्मिन्नधीयते" इति कवन्धो मेघः। "उदकमपि कवन्धमुच्यते"। तत् कस्मात्? अत्रोत्तरं पदं प्रथमं निराह,—'वन्धिः" धातुः 'अनिभृतत्वे' निभृतस्तावदचपलः, तद्विपरीतार्थवाची वन्धि. कं च तच्चपलं चेति कवन्धम्, सुखं चानवस्थायि चेत्यर्थः॥

"तस्य" वरुणस्य मध्यमत्वे "एषा" "अपरा" ऋक् "भवति"। सा पुनः किमर्थम्? वर्णकर्म वरुणाभिधानं च सूर्येऽपि दृष्टम्, उत्तरस्यान्तु शब्दत एव "मध्यमः" वरुण इति विशेषहेतुनोपपादयति—॥ ४॥

तमूषु समना गिरा पितॄणाञ्च मन्मभिः। नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे॥ तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितॄणाञ्च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिर्ऋषिर्नाभाको बभूव य स्यन्दमानानामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति। नभन्तामन्यके समे। मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसङ्कल्पा रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा यदरुत्तद्रुद्रस्य रुद्रत्व-

मिति काठकं यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकं तस्यैषा भवति ॥ ५ ॥

"तमू षु समना" – इति (ऋ० सं० ६, ३, २६, १) नाभाकस्यार्षम्। सु-इत्ये तस्योपसर्गस्य सम्बन्धि क्रियापदं नास्तीति "तं स्वभिष्टौमि"—इत्यभिपूर्व क्रियापदमध्याह्रियते,—सुष्ठुतमभिष्टौमि। केन ? "समना" तत् "समानया" तद्योग्यया, 'गिरा' "गीत्या = स्तुत्या" "पितृणा च मन्मभिः" ये च पितृणा मननीयाः मननार्हाः बहुमानाः स्तोमाः, तैश्चाहमभिष्टौमि। 'नाभाकस्य प्रशस्तिभिः' याश्च मम नाभाकस्य प्रशस्तयः स्तुतयः योग्या तं वरुणं प्रति, ताभिरभिष्टौमि। किंलक्षणः ? 'यः' वरुणः 'सिन्धूनाम् उपोदये'. "स्यन्दमानानाम्" "अपाम्" 'उपोदये' उपोद्गमे। अन्तरिक्षलोके वर्षस्य 'सप्तस्वसा' सम्पद्यते। मध्यमाभिः अश्वाद्याभिः सप्तभिः "वाग्भिः" 'स मध्यमः'—"इति" वरुणः "निरुच्यते" शब्दत एवैतस्मिन्मन्त्रे। तदनुग्रहादस्माकं 'नभन्तामन्यके समे' "मा भूवन्नन्यके सर्वे" अन्य एव अन्यके शत्रवः, ते माभूवन्नस्माकमिति॥

"रुद्रः" कस्मात्? "रौतीति सतः" स हि स्तनयित्नुशब्दं करोति, "रोरूयमाणो द्रवति इति वा" शब्दं कुर्वाणो मेघोदरस्थो द्रवतीति, "रोदयतेः वा" शत्रूनसौ रोदयति दुःखयति। ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"यदरुदत् तद्रुद्रस्य रुद्रत्वम्"— "इति" "काठकम्" कठानां प्रवचनम्। ऐतिहासिकैरेतत् सम-

वैति,—"स किल पितरं प्रजापतिमिषुणा विध्यन्तुमनुशोचन्नरुदत्, तद्रुद्रस्य रुद्रत्वम्। यदरोदीत् तद्रुद्रस्य रुद्रत्वम्"—"इति, हारिद्राविकम्" स एवार्थः, केवलन्तु शाखान्तरमन्यत्। एवं शाखान्तरेभ्योऽपि देवताभिधाननिर्वचनान्तराण्युपेक्ष्याणीत्युपप्रदर्शनार्थम्। हारिद्रवो नाम मैत्रायणीयानां शाखाभेद ॥

"तस्य एषा भवति"—॥ ५ ॥

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने। अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः। इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्नैः सहमानाय विधात्रे तिग्मायुधाय भरत शृणोतु नस्तिग्मन्तेजतेरुत्साहकर्मण आयुधमायोधनात्तस्यैषापरा भवति ॥ ६ ॥

"इमा रुद्राय"—इति (ऋ० सं० ५, ४, १३, १)। वसिष्ठस्यार्षम्, उत्तरा च। शूलगवे विनियोगः। हे स्तोतारः! यूयमुच्यध्वे,—'इमा गिरः' स्तुती 'भरत' 'रुद्राय' किंलक्षणाय? 'स्थिरधन्वने' "दृढधनुषे, 'क्षिप्रेषवे' शीघ्रेषवे 'देवाय' दानादिगुणयुक्ताय, 'स्वधाव्ने' स्वधावन्ते "अन्नवते" शीघ्रेषवे 'अषाळ्हाय' "अषाढाय" अनभिभूताय केनचित् "सहमानाय" नित्यमभिभवते शत्रून्, 'वेधसे' "विधात्रे" 'तिग्मायुधाय